# नव-नाट्य-मञ्जरी

लेखक:

भा. के. ढोक

प्रथमावृत्तिः मूल्यम्—रु. १.२५

...भा-प्रचारिणी सभा, नागपुरम् ।

# नव-नाट्य-मञ्जरी

लेखक :

भा. के. ढोक

प्रथमावृत्ति :

मूल्यम्—रू. १.२५

प्रकाशिका——संस्कृत-भाषा-प्रचारिणी सभा, नागपुरम् ।

# नाटककार–परिचयः

'आत्मनाम न गृह्णीयात् आयुष्कामः' इति स्मर्यते । आत्म-परिचयदाने अपि आत्मश्लाघा-दोष-भयेन एव संकोचम् अनुभवन्ति सज्जनाः । अन्ये च प्रकृत्या एव प्रसिद्धि-पराङ्मुखाः । अतः कारणत्रितये अस्मिन् विद्यमाने परिचितेन एव केनचित् नाटककर्तुः अल्प-परिचयः कारयितव्यः इति एव अहम् अत्र लिखितुं प्रवृत्तः ।

वस्तुतः ग्रंथकर्तुः सम्यक्-परिचयः तस्य ग्रंथेन एव भवति । स पुनः पाठकानां भवेत् एव ग्रंथपठनात् अनन्तरम् । परं नाटकस्य आमुखम् इव आदौ एव तान् पठनाभिमुखान् विधातुं लेखकस्य अल्पः परिचयः मुद्रित-पुस्तक-प्रकाशकानाम् उपचार-विशेषः सांप्रतिकः । तत् अनुसृत्य अधिकृतः इति प्रस्तुतम् अनुसरामि ।

मध्यप्रदेशे छिन्दवाडा-मण्डले मोहखेटः नाम-ग्रामविशेषः । तत्र न्युषितेषु पञ्चषेषु ब्राह्मणकुटुम्बेषु ढोकोपाह्वम् अथ च वराडपांडे इति ज्ञातं कुलद्वयं संस्कार–शिक्षा–जीविका–हेतोः छिन्दवाडानगरं प्राप्तम् । तत्र एव लब्धजन्मानौ आवाम् अपि (नाटककारः परिचयकर्ता च) परस्परं परिचितौ वयसः वर्षषट्क-मिते अन्तरे अपि सुहृदौ इत्येव मे अधिकारः अत्र विषये ।

श्री. भास्कर-केशव-ढोक-महोदयः शके १८२२ तमे आषाढ-शुक्ल-षष्ठ्यां जातः । प्राथमिकं शिक्षणं छिन्दवाडानगरे समाप्य नागपुरे नीलसिटी-हायस्कूल-नामकं सुप्रसिद्धं विद्यालयं माध्यमिक-शिक्षार्थं प्राप्तः । तत्र सुयोग्येभ्यः गुरुभ्यः प्राप्तसंस्कारः लब्ध-प्रेरणः च स संस्कृते बद्धप्रेमा काव्य-करणे च दृष्ट-प्रतिभः स्वयम् एव उच्चतरम् अध्ययनं कृतवान् । मम तस्मिन् स्नेहवृद्धिः तस्य काव्यकौशल्यात् एव बाल्यात् प्रभृति जाता अद्य यावत् स्थिता च ।

रामायण–महाभारत–पुराण–प्रभृतीनां मूलतः पारायणम् अनेन अनेकदा कृतं विद्यते । गीतरचनायां अभिनयशिक्षणे च विशेषा रुचिः तस्य । चित्रकूटस्थ-सद्गुरोः श्री. माधवनाथ-महाराज-प्राप्तानुग्रहः असौ श्री नाथ-विद्यालयं छिन्दवाडानगरे स्थापितवान् निवृत्ति यावत् च तत्र एव अध्यापनं कृतवान् । तस्य एव निरलसेन प्रयत्नेन विद्यालयः असौ सुस्थितः प्रथितः च जातः । तत्र एव प्रतिवर्षं स्नेह-सम्मेलन-निमित्तेन स्वलिखितानि संस्कृतनाटकानि छात्रैः अभिनायितानि तेन, जनतायाः प्रशंसापात्राणि अभिरुचिवर्धकाणि च सिद्धानि ।

संस्कृतभाषायाः प्रचारः सामान्य-जनतायाम् अपि नाट्य-प्रयोगद्वारा एव सुकरः भवति इति हेतोः श्री. ढोक-महोदयस्य नाटकानि संस्कृत-भवितव्ये नाम साप्ताहिके प्रसिद्धिं नीतानि । साम्प्रतं तेषु कतिचन पुस्तकरूपेण संस्कृतजगतः पुरतः प्रकाशितानि तिष्ठन्ति । तानि शालासु, महाविद्यालयेषु, सामाजिकेषु उत्सव-समारोहेषु च अभिनीतानि भवितुम् अर्हाणि इति समर्थये । जनतायाः प्रसादेन लेखकस्य प्रोत्साहनं संस्कृतस्य प्रचारं च कामये ।

विनीतः

नागपुरम्
वर्षप्रतिपद्
शके १८८७

दि. वि. वराडपाण्डे

प्राचार्यः श्री. बिं. नगर-महाविद्यालयः
संस्कृत-भवितव्य–सम्पादकः

# प्रास्ताविकम्

श्री. भा. के. ढोक महाशयनिर्मितम् इदम् एकाङ्किकाषट्कं रसिकानां पुरस्ताद् उपस्थापयतः मे नितरां प्रमोदते चेतः । एकाङ्किकानाम् ईदृशः प्रकारः संस्कृत-नाट्य-वाङ्मये न सवर्था नवीनः । महाकवेर्भासस्य नाटकचक्रे वर्तन्ते काश्चन एकांकिकाः यासु रसमयानि नाट्यवस्तूनि उपक्षिप्तानि दृश्यन्ते । तथापि आधुनिकं नाट्यतन्त्रमवलम्ब्य लिखितानि इमानि रूपकाणि आधुनिकानां कृते नवीनानि एव स्युः इति मे विश्वासः ।

अस्मिन् षट्के सर्वाण्यपि कथावस्तूनि रामायण-महाभारत-पुराण-सदृशेभ्यः उपजीव्य-ग्रन्थेभ्य एव गृहीतानि, नाट्यकर्त्रा च तत्र तत्र नाट्योचितं परिवर्तनं कृत्वा सरसरमणीयतया रूपकेषु निबद्धानि । पद्यभारोपि प्रायः प्रचलिता गान-पद्धतीः अनुसृतः । एकाङ्किकाश्च यथाप्रसङ्गं प्रवेशेषु विभक्ताः । एवम् आधुनिक-तन्त्रानुसारं प्राचीनमेव नाट्यप्रकारं पुनः प्रवर्तयता नाट्यकर्त्रा समयोचितं कौशलं प्रकटीकृतम् । अतः अस्य षट्कस्य निर्माता धन्यवादान् अर्हति ।

एताः षडपि एकाङ्किकाः विद्यार्थिनां कृते लिखिताः सन्ति । संवादेषु भाषा सुलभा, प्रसन्ना, भावद्योतिका च वर्तते । पात्राणां निर्माणे च कौशल्यं दृश्यते । स्थले स्थले प्राचीन-कवीनां संस्कारोऽपि प्रकटीभवति विशेषतः महाकवेः कालिदासस्य । यथा 'पार्वती परीक्षायां' कुमारसंभव-पञ्चमाङ्कस्य । एतेषाम् अभ्यासेन अभिनयेन च विद्यार्थिनां संस्कृतवाङ्मये अनायासेन प्रवेशः भवेत्, इति निःशङ्कं वक्तुं पार्यते । शालानां सम्मेलनेषु एतासाम् एकाङ्किकानां अभिनयः क्रियते चेत् समीचीनं भवेत् । सर्वेऽपि विद्यार्थिनः नाट्यरसिकाश्च अस्य एकाङ्किका-षट्कस्य सहर्षं स्वागतं करिष्यन्ति इति अहम् आशासे ।

नागपुरम्
सौर चैत्रः १, १८८७
(२ एप्रिल १९६५)

ग. त्र्यं. देशपांडे
प्रधानसंस्कृतप्राध्यापकः
नागपुर–विद्यापीठम्

# श्री-ध्रुव-चरितम्

(मंगलाचरणम् तिलक कामोद)

प्रणतिरियम् । प्रणत–पदम् । सुरनरमुनिगीतपदम् ।।ध्रु।।
विलसन्तं मनसि सताम् । विदलन्तं दलमसताम् मङ्गलमतिम दमयम् ।।१।।
सर्गस्थितिविलयकृतम् । भोगिभोगशयनकृतम् । हृतनतभवजलधिभयम्।।२।।
मोहतिमिरनिकरहरम् । ज्ञानार्क दीप्तियुतम् । शिवसुन्दरसत्यमयम् ।।३।।
वाङ्मानसबुद्धिपरम् । भक्तानां ध्यानगतम् । कमलेशं स्नेहमयम् ।।४।।

## प्रथमः प्रवेशः

(ततः प्रविशति आसनस्थः नृपः ।)

उत्तानपादः नृपः –अहो एकान्तनिष्ठुरः अयं सपत्नीभावः ! आर्यायाः सुनीतेः निवास–स्थानं प्रति मे गमनमपि देवी सुरुचिः न सहते । न जाने कथम् अद्य मे हृदयं तत्र गन्तुम् अतीव समुत्सुकम् अस्ति । परं सुरुचेः अपि अप्रियं कर्तुम् अहं न शक्नोमि । अहो मे मनसः दौर्बल्यं पराधीनता च ! (स्मृत्वा) अद्य खलु मे ध्रुवस्य षष्ठः जन्मदिनोत्सवः । अद्यावधि मया पुत्रमुखमपि नालोकितम् । इदानीं मे हृदयं पुत्रमुखावलोकन-कांक्षया अतीव सोत्सुकं संजातम् । निष्ठुरहृदयः अयं जनः इति मामुद्दिश्य जनाः अवश्यं वदेयुः । परं चंद्रदर्शनोत्सुकचकोरः इव मे हृदयमपि तस्य दर्शनाभावात् व्याकुलीभवति । अहो किमेतत् ! मे दक्षिणः बाहुः स्पन्दते । किं नु स्यात् अस्य फलम् ? पुत्र-स्मरणेन सहैव एतद् बाहुस्पंदनं संजातम् । अपि मे प्रियपुत्रः मे दृष्टिगोचरो भूत्वा मे चिराकांक्षां पूरयिष्यति ? हृदय! स्थिरीभव! किमेवं अज्ञातया भावनया व्याकुलीभवसि ? (द्वारपालः प्रविशति)

द्वारपालः —जयतु महाराजः । पञ्चषड्वर्षीयः कश्चित् कुमारकः भवद्दर्शनापेक्षया वहिस्तिष्ठति ।

नृपः –(आत्मगतम्) को नु खलु अयं कुमारः भवेत् ? (प्रकटम्) सत्वरं तं प्रवेशय (द्वारपालः गच्छति) ।

ध्रुवः –(प्रविश्य नृपम् अवलोक्य आत्मगतम्) किम्, एष एव मे प्रियः तातः ? तत्रभवत्या मात्रा निवेदितानि लक्षणानि अत्र दृश्यन्ते खलु । (प्रकटम्) प्रिय तात! वन्दे ।

नृपः –(आत्मगतम्) अहो मधुरं दर्शनम् अस्य कुमारस्य ।

फुल्लाम्बुजस्पर्धिसुकोमलास्यम् अपूर्ववात्सल्यतरङ्गपंक्तीः ।।
उत्पाद्य सद्यो हृदयार्णवे मे अभूतपूर्वां मुदमातनोति ।।

मुखश्रिया तु अयं माम् अनुकरोति । (हृदय स्थिरीभव ! देवी सुरुचिः अत्र मा आगच्छतु । अन्यथा न जाने विधिः किं विधास्यति) । (प्रकटम्) प्रिय कुमार ! किं ते नामाभिधानम्? कुतः किमर्थं च अत्र समागतोऽसि ?

ध्रुवः –ध्रुवनामधेयोऽयं जनः । सुनीतिः नाम मे माता नातिदूरस्थे उटजे वसति । अद्य एव मया ज्ञातं यत् अत्रभवान् एव मे पूज्यः तातः इति । अतः भवच्चरणदर्शनकांक्षया अहम् अत्र समागतोऽस्मि ।

नृपः –एहि एहि! प्रियवत्स! एहि! एष एव ते एकान्तनिष्ठुरः पिता । त्वां दृष्ट्वा धन्यतां गतोऽस्मि । (अङ्के समारोप्य) अद्य मे हृदयचिरोषिता आकांक्षा सफलीभूता ।

ध्रुवः –अतीव भाग्यवान् अस्मि यत् मे निसर्गप्राप्तव्यं स्थानं दिष्टया मया प्राप्तम् । प्रिय तात! कथम् अहम् एतावत्कालं वंचितः अस्मात् मदधिकारात् ?

नृपः –(आत्मगतम्) किम् उत्तरं ददामि ? (प्रकटम्) मे महद्दुर्भाग्यं खलु यत् एतद् रत्नम् अद्यावधि मे लोचनपथं विधात्रा नानीतम् । अधुना न कोऽपि त्वां दूरीकर्तुं प्रभवति ।

सुरुचिः–( प्रविश्य ) कोऽयं दरिद्रः बालकः नृपस्याङ्के उपविष्टः ? अदृष्टपूर्वं खलु एतत् प्रजावात्सल्यम् । अहो धृष्टता अस्य वराकस्य !

ध्रुवः –प्रिय तात! का एषा आर्या ?

नृपः –इयमपि ते माता भवति ।

ध्रुवः –अपि एवम् ? मातः प्रणमामि त्वाम् ।

नृपः –चिरं विप्रोषितः अयं पुत्रः त्वया आशीर्भिः अनुगृहीतव्यः ।

सुरुचिः –कथम् एष वराकः मे पुत्रस्थाने शोभते? रत्नखन्यां कुतः काचस्य संभवः ? कुतः आनीतः अयं राजपुत्रध्रुवः अस्मिन् राजमन्दिरे !

नृपः–यथा उत्तमः तथा अयमपि आवयोः पुत्रः एव । आर्या सुनीतिः अस्य जननी ।

सुरुचिः –(आत्मगतम्) किम् अयं मे सपत्नीपुत्रः ? आः ज्ञातं मया । सर्वथा वञ्चितास्मि आर्यपुत्रेण ! अत्रभवता तस्यां मे सपत्न्यां गुप्तरूपेण प्रणयः अर्पितः इति स्फुटं दृश्यते । तस्यैव एतत् फलम् । नाहम् एतं मे अधिक्षेपं सोढुं शक्नोमि । (प्रकाशं ध्रुवं प्रति) शृणु रे वंचक !

गच्छ रे शठ शिशो ! गच्छ तूर्णम् ।
तिष्ठ नच मत्पुरः एकमपि रे क्षणम् ।।ध्रु।।
राजसिंहासने नृपस्यांङ्केऽपि वा ।
आसितुं नार्हसि क्षुद्र रे त्वम् ।।१।।

सुष्ठु जानामि यद् राज्यपदलिप्सया
हन्तुकामः सुतं मे खलु त्वम् ।।२।।
प्राप्स्यसे नो यशो मयि चात्र जीवति ।
कुरु कृष्णमाननं याहि निरयम् ।।३।।
नानुज्ञास्यामि रे स्थातुमत्र क्षणम् ।
गच्छ रे गच्छ रे गच्छ तूर्णम् ।।४।।

नृपः—अलम् एतेन सपत्नीभावेन । पश्य पश्य कथम् अयं करुणकरुणं भवतीम् अवलोकयति । अङ्गीकुरुष्व एनम् ।

सुरुचिः—तन्न शक्यम् । निःसार्यताम् एष विषप्ररोहः अथवा भवता अहं परित्यक्ता इत्यहं मन्ये ।

नृपः—प्रिये क्षमस्व । मा एवं कोपं कुरु ।

सुरुचिः—मम पुत्रः एव भवदङ्के उपवेष्टुं पात्रम् अस्ति ।

ध्रुवः—किम् अहम् अस्मिन् अङ्के उपवेष्टुं न अर्हामि । मया सह उत्तमः अपि अत्र विराजताम् ।

सुरुचिः—क्व राजमहिषी-उदरसंभवः उत्तमः क्व च त्वं परित्यक्तायाः दरिद्रायाः वराकः पुत्रः । ममोदरसंभवः एव अत्र उपवेष्टुम् अर्हति । (नृपं प्रति) पुनर्ब्रवीमि निःसार्यताम् एष विषप्ररोहः । अन्यथा त्यज्यते मया एतद् राजमन्दिरम् । सुखेनैव स्थाप्यताम् असौ सिंहासने ।

ध्रुवः—मातः नाहं राज्यपदलिप्सया अत्र आगतः ।

न च राज्यपदे मम कामः । न च विभवे वा सम्माने ।
परधृतपदलिप्सा न च मे । वाऽसूया कस्य जनस्य ।
द्वेष्योऽस्ति न मे कोऽपीह । न च हन्तुं कमपीच्छामि ।
पूज्यतातचरणान् द्रष्टुम् ।
तत्स्नेहदृष्टिमथ लब्धुम् ।
आशिषं च ते सम्प्राप्तुम् ।
आगतोऽहमस्मिन् स्थाने । न च वाञ्छा मातर् मेऽन्या ।।

सुरुचिः—अविश्वसनीयानि खलु रिपुवचनानि । (नृपं प्रति) किं निश्चितम् अत्रभवता ? एष इतः गच्छतु । अथ वा अहम् इदं राजमन्दिरं त्यक्त्वा कुत्रापि गच्छामि ।

ध्रुवः—मातः मा एवं कोपः क्रियतां तातस्योपरि । नाहं पित्रा अत्र आनीतः । अहमेव अत्र स्वयम् आगतोऽस्मि । यदि मे अत्र अवस्थानं भवत्याः अप्रियं भवति तर्हि अहम् इतः अन्यत्र गमिष्यामि । तात, मत्कृते शोकः न कार्यः । भाग्यवानस्मि खलु यत् मया प्रियताताङ्कस्पर्शः अनुभूतः । मन्ये अहं मात्रा उपकृतः एव । अचिरेण मया ध्रुवपदं प्राप्तव्यम् । मातर् ! अभिवादयामि । तात ! अभिवन्दे । भवतः स्नेहपूर्णं हृदयं मां कदापि न विस्मरिष्यति । (निर्गच्छति ।)

नृपः—प्रिय ध्रुव ! मा गच्छ, मा गच्छ ! एषः अहमपि त्वया सह आगच्छामि ।

सुरुचिः—अहो किम् इदम् ? न युज्यते एतद् हृदयदौर्बल्यम् । आगम्यताम् । अस्माकं प्रिय-हरिण्याः नूतनजातशावकं द्रष्टुम् गच्छावः ।

## द्वितीयः प्रवेशः

ध्रुवः—अहो घोरम् अरण्यम् एतत् । मार्गोऽपि न लक्ष्यते । प्रभुं विना कोऽन्यः मे अत्र मार्गदर्शकः भवेत्—

> पाहि प्रभो मां दीनम्——बालं शरणापन्नम् ॥ध्रु॥
> त्वं खलु रक्षसि निजसद्भक्तम् । इति साधूनां वचनम् ।
> श्रुत्वा प्राप्तो वनेऽहमस्मिन् । द्रष्टुं त्वत्पदकमलम् ॥
> धाव विभो करुणाकर शीघ्रम् । कुरु निजकृपाप्रदानम् ॥

(नेपथ्ये नारदः–) नारायण !

**ध्रुवः**–हं भोः कः अयम् आयाति अस्मिन् निर्जने वने ? प्रभुस्मरणं सद्यः फलदायि जातम् इति मन्ये । आकृतिस्तु पुरुष-रूपं सूचयति ।

**नारदः**–(प्रविश्य)

याहि मनुज शरणं विष्णोः । पदसरोरुहम् ।।
त्वं हि तेन तरसि चाशु । दुःखसागरम् ।।ध्रु।।

स च स्मर्तृगामी भगवान्
स्मरतः प्रति धावति भक्तान्
वारयति च तेषां सकलं । सपदि संकटम् ।।१।।

सन्निधः सदा स्मर्तृणाम्
प्रभुर्भवति चरणनतानाम्
पूरयति च विविधास्तेषाम्
कामनाः स्वयम् ।।२।।

नारायण ! नारायण !

**ध्रुवः**–(निपुणं निरीक्ष्य) अहो देवर्षिः नारदः अयम् इति जाने रूपवेषभाषावशात् । (नारदं प्रति) भाग्येन मे खलु भवतः अत्रागमनम् अभवत् । मत्प्रार्थनां श्रुत्वा प्रभुणा भवान् अत्र प्रेषितः इति अहं मन्ये ।

**नारदः**–वत्स अस्मिन् बालवयसि अस्मिन् घोरे अरण्ये किमर्थम् अयं संचारः ?

**ध्रुवः**–सापत्नमात्रा अहं पितुरङ्कात् निःसारितः । अहं तु तत् स्थानं प्राप्तुम् इच्छामि यतः न कोऽपि मां दूरीकर्तुं प्रभवेत् । अपि भवान् मे मार्गदर्शकः भवेत् ?

**नारदः**—अवश्यम्—विष्णोः प्रसादेन त्वम् अभिवाञ्छितं प्राप्स्यसि ।

**ध्रुवः**—क्व वैकुण्ठवासी विष्णुः क्व अहं भूतलवासी दीनः वालकः ! अपि अस्ति कश्चित् सुलभः मार्गः तस्य प्राप्तेः ?

**नारदः**—दृढः निश्चयः किं न साध्नुयात् ?

**ध्रुवः**—अहं भवदुपदेशं पालयामि ।

**नारदः**—(कर्णे कथयित्वा) अस्य मन्त्रस्य अखण्डजपः अस्य एव वृक्षस्य अधः स्थित्वा त्वया कार्यः । तव निर्मलया भक्त्या भगवान् गरुडध्वजः त्वयि अवश्यं प्रसादं करिष्यति ।

**ध्रुवः**—अनुगृहीतोऽस्मि । देवर्षे ! अभिवादयामि ।

**नारदः**—नारायण !—यशोवान् भव ।

याहि मनुज शरणम्—इति गायन् गच्छति ।

## तृतीयः प्रवेशः

(ध्रुवः 'ॐ नमो भगवते वासुदेवाय' इति मन्त्रं जपन् दृश्यते ।)

**विष्णुः**—(प्रकटीभूय शङ्खेन ध्रुवस्य कपोलं स्पृशति ।) वत्स ध्रुव, पश्य अहम् आगतोऽस्मि ।

**ध्रुवः**—(नेत्रे उन्मील्य) अहो मे सौभाग्यम् ! मत्पूर्व-पुण्यसंचितैः प्रभुचरणकमलयोः पावनं दर्शनं सञ्जातम् । भगवन् अनुगृहीतोऽस्मि ।

**विष्णुः**—तव दृढनिश्चयेन विमलया च भक्त्या अहम् अत्र आकृष्टोऽस्मि । सन्तुष्टोऽहम् । ब्रूहि ते मनीषाम् । किं निमित्तम् एषः अरण्यवासः कठिनतपस्या च ।

ध्रुवः—भगवन्, सर्वज्ञोऽसि । किं मया वक्तव्यम् । अहं तु तत्स्थानं प्राप्तुम् इच्छामि यस्मात् न कोऽपि मां दूरीकर्तुम् अलं भवेत् । अपरं च मे हृदये भवत्पादयोः भक्तिः सदैव राजतु ।

विष्णुः-तव वाञ्छासिद्धिः जाता एव । प्रथमं त्वम् अनेक-सहस्रवर्षाणि पितुः राज्यम् उपभोक्ष्यसे । पश्चात् त्वम् अन्तरिक्षे ध्रुवस्थानं प्राप्स्यसि । सारुन्धतीकैः सप्तर्षिभिः परिक्राम्यमानः त्वं सर्वेषां लोकानां पूजास्थानं भविष्यसि । आयुर्वर्धनकांक्षया जनाः ते दर्शनं सादरं करिष्यन्ति । किम् अन्यत् ते प्रियं करोमि ?

ध्रुवः—न किञ्चित् अवशिष्यते—परम् एतत् वक्तु-कामोऽस्मि ।

(भरतवाक्यम्—)

प्रभुवर क्रियतां नः शुभम् । मानवानाम् ॥ध्रु॥
वितर सन्मतिं जनेषु सततम् । अपनय तेषामशुभां कुमतिम् ।
नाशय माधव दुर्गुण-सरणिम् । भूषय सुगुणैर्निजभक्तालिम् ॥१॥
दिने दिने भारतजनतेयम् । पुरस्सरति भोः पतनं घोरम् ।
कृपेक्षणं कुरु तस्यां तूर्णम् । पतनात् तस्याः क्रियतामवनम् ॥२॥
भारतभूमिं वैरिविहीनाम् । कुरु तामखिलैर्विभवैर्युक्ताम् ।
धृतिबलतेजोऽन्विता च सततम् । संराजतु सा प्रभो पृथिव्याम् ॥३॥

———

# पार्वती परीक्षणम् ।

—:O:—

## नान्दी

शम्भो शिवहर गिरिजानाथ । विभो त्वां शरणं याम वयम् ।।
भक्तानां सततं हृद्भवने
निवसन् रक्षसि खलु तान् व्यसने
कुरुषे वांछापूर्तिकृशाम् । विभो त्वां शरणं याम वयम् ।।१।।
आशुतोष इति महितोऽसि त्वम्
हरसि विभो दीनानां दैन्यम्
जय मदनान्तक नतजनपाल । प्रभो त्वां शरणं याम वयम् ।।२।।
सृजस्यवसि हंसीदं विश्वम्
सततं कुरुषे भक्तोद्धरणम्
जय त्रिपुरान्तक त्रिभुवननाथ । विभो त्वां शरणं याम वयम् ।।३।।

## प्रथमः प्रवेशः

(जया–विजये प्रविशतः)

**विजया**—सखि जये ! पर्याप्ता इयं सपर्या सामग्री । प्रथम-प्रभवाणि इमानि पक्वफलानि मया अद्य आतिथ्यार्थं समाहृतानि ।

**जया**—युक्तम् एतत् । परम् एतानि दृष्ट्वा मे मनः विचित्रैः भावैः संकुलीभवति ।

**विजया**—कं विषयम् अधिकृत्य इमे ते भावाः ।

**जया**—ननु नौ सखीगता हि ते । पश्य, अस्मत्सख्या संरोपिताः स्नेहेन च संवर्धिताः एते तपोवनवृक्षाः तावत् सुफलैः

संयुता: संजाता:। परं एतादृशीं तपस्साधनां कुर्वत्या: तस्या मनोरथद्रुमो नाद्यपि इष्टफलेन युज्यते। न जाने कदा तस्या: आराध्यदेवस्तस्यां प्रसीदेत्।

**विजया**–ननु भक्तानां भावान् सम्यक् परीक्ष्य एव देवा: तेषु प्रसीदन्ति।

**जया**–प्रकृत्यैव कृशाङ्गी अस्मत्सखी अनेन अतिदारुणेन तपसा अधिकतरा कृशा जाता।

**विजया**–तथापि आवाभ्यां धीरता न त्याज्या। योग्यकाले नौ सखी तप:फलम् अवश्यं प्राप्स्यति। (अवलोक्य) पश्य तत्र, अग्रत: देवदारो: निकटं कोऽपि द्विजयुवा इतस्तत: अवलोकयन् दृश्यते। नवागत इव आभाति। अस्मत्सख्या: दर्शनार्थम् अस्य आगमनं संजातम् इति अहं तर्कयामि।

**जया**–सत्यं भणसि। इतोमुख एव आगच्छन् स दृश्यते। सख्या: तपोनुष्ठानेन प्रभाविता: बहुश: ऋषय: तस्या: दर्शनार्थं प्रतिदिनम् आगच्छन्ति। पश्य दिव्यतेजोवलयांकितं तस्य मुखमण्डलम्। अवश्यं केनापि महापुरुषेण तेन भाव्यम् इति मे निश्चिता मति:। आवां तावत् एकपार्श्वे तिष्ठाव:। (तथा कुरुत:)

**शंकर:**–(प्रविश्य) अहो रमणीयता अस्य तपोवनस्य। ऋषिजनमुखात् श्रुतादपि अधिकं दृश्यतेऽत्र। अहो आश्चर्यम्–

> **दृश्यन्ते सञ्चरन्त: प्रकृतिज–रिपवस्त्यक्तवैरा हि सत्वा**
> **वाता वान्ति प्रसन्ना: कुसुमसुरभय: प्रीणयन्तीव जीवान्।**
> **स्रोतांस्येतानि सम्यङ्ग मदिरमधुरवैराह्वयन्तीव पांथान्**
> **दृश्यैरेतैरुदात्तै: स्फुटमधिवसति: सूच्यते तापसानाम्॥**

एष एव प्रियपार्वत्या आश्रम: स्यात्। बलात् आकृष्टोऽहं

तस्या महत्तपोनुष्ठानकीर्त्या । केवलं विनोदार्थम् एष छद्मवेषः कृतो मया । कोऽपि अत्र आयाति इति मन्ये ।

जया-विजये–(उपसृत्य) द्विजश्रेष्ठ ! प्रणमावः ।

शंकरः–सफलमनोरथे भूयास्तम् । के भवत्यौ । कस्य अयम् आश्रमः ।

विजया–आवयोः सख्याः हिमवत्कन्यकायाः पार्वत्याः आश्रमोऽआवां तस्याः सख्यौ जयाविजये ।

शंकरः–तर्हि वांछितं स्थानम् आगतोऽहम् । ऋषीणां मुखेभ्यः युवयोः सख्याः तपःकीर्तिम् आकर्ण्य तस्याः पुण्यदर्शनोत्सुकोऽहम् अत्र आगतोऽस्मि ।

जया–अनुगृहीता नौ सखी । क्षणमत्र छायायां विश्राम्यताम् अहं तावत् पुरोगत्वा भवदागमनं सख्यै निवेदयामि । (निर्गच्छति)

शंकरः–मार्गभ्रमणात् रजोऽवलिप्तौ चरणौ प्रस्रवणे प्रक्षाल्य एव आश्रमप्रवेशः कार्यः । तर्हि तत्रैव प्रथमं गच्छावः ।

विजया–तथा । (निर्गच्छतः)

— —— —

## द्वितीयः प्रवेशः

पाहि प्रभो पदलीनाम् । अनन्यशरणां दासीं दीनाम् ।।
तपस्विचरितं मया स्वीकृतम् । प्राप्तुं त्वत्पदकमलम् ।।१।।
त्यक्त्वा सर्वान् बंधुगणान् स्वान् आयाता त्वच्छरणम् ।।
जानासि न किं हृदयस्थस्त्वम् मम हृन्निर्मलभावम् ।।२।।

आः मम वामं नेत्रं स्पन्दते । नारीणां वामाक्षिस्पन्दनं शुभसूचकम् इति श्रूयते । परं साम्प्रतं मया किं फलं प्राप्तव्यम् इति तर्कयितुं

न शक्नोमि । भवतु । मध्याह्नवेला समायाता । परं सपर्या-सामग्रीं समाहर्तुं गते सख्यौ अद्यापि न निवर्तिते ।

जया–(प्रविश्य) एषा अहम् आगता । समानीता च सपर्यासामग्री । सखि पार्वति–

कौषेयाम्बरसंवृतोज्ज्वलवपुश्चाषाढपाणिः शमी ।
दिव्यब्रह्मरुचिप्रदीप्तवदनो वैदग्ध्यवागीश्वरः ।
साक्षाद्वै प्रथमाश्रमस्तनुधरो भास्वज्जटावानिव ।
एको ब्रह्मयुवा समागत इह त्वद्दर्शनाकांक्षया ।।

पार्वति–क्व आस्ते सोऽधुना ।

जया–अचिरेण एव विजया तम् अत्र आनेष्यति । एषा विजया आगता ।

विजया–(प्रविश्य) प्रिय सखि एकः ब्रह्मचारी द्विजयुवा भवद्दर्शनार्थी वहिस्तिष्ठति ।

पार्वती–तेन हि सप्रश्रयम् आनीयताम् असौ ।

विजया–तथा । (निर्गता)

पार्वती–जये, आस्तीर्यतां तद् हरिणाजिनम् अत्र ।

जया–तथा–(तथा कुरुते)

(विजया ब्रह्मचारी च प्रविशतः)

ब्रह्मचारी–अहो शान्तं प्रसन्नम् इदम् आश्रमस्थानम् । अदृष्टपूर्वं च अस्य मनोहारित्वं मनःप्रसादं जनयति ।

पार्वती–(उपसृत्य) स्वागतम् अतिथये । इदम् आसनम् अलंक्रियताम् ।

शंकर–(आसने उपविश्य सस्मितम्) अपि तपो वर्धते?

पार्वती–भवत्सदृशानां पुण्यजनानाम् एप अनुग्रहः एव

तद्दर्शयति। (सपर्यां करोति)

शंकरः–(सपर्यान्ते) स्वम् ईप्सितं लभस्व। सन्तुष्टोऽहं भवतीनां मधुरेण आतिथ्यकर्मणा। तद हि भवतीनां हृदयमाधुर्यं प्रकटयति।

पार्वती–कृतार्थोऽयं जनो भवदनुग्रहात्। स्वपदरजोभिः एष आश्रमो भवता पावनीकृतोऽस्ति।

शंकर–यन्मया ऋषीणां मुखेभ्यः श्रुतं तत् सर्वं यथार्थमेव दृश्यते। न कापि अत्युक्तिः अत्र। पार्वति, कौतुकवशात् किंचत् प्रष्टुम् इच्छामि। रहस्यं न चेत् प्रत्युच्यताम्।

पार्वतीः–पृच्छयताम्।

शंकरः–अतीव तीव्रं तपस्तप्यते भवत्या। तेन हि अतीव कृशा जातासि त्वम्। शरीरमाद्यं खलु धर्मसाधनम् इति यदुच्चते तत् तवापि विदितम्। अस्तु एतत्। मन्ये कयापि कामनया भवत्या एषा तपःसाधना क्रियते। ममापि किंचित् तपो विद्यते तस्यार्धम् अहम् तुभ्यं प्रदास्यामि। तेन स्वेप्सितं लभस्व।

पार्वती–अतीव अनुगृहीतास्मि अनेन भवदौदार्येण। महत् फलप्राप्त्यर्थमेव क्रियते महती तपस्या।

शंकरः–सत्यं भणसि। परं किं तत् महत्फलं स्यात् यत् त्वया अद्यापि न प्राप्यते।

> शैलेन्द्रो हिमवान् पिता तव महान् यो देवतात्मा खलु।
> विख्यातास्त्रिदिवेशभूमय इमे तस्य प्रदेशा इति।
> लावण्यं तव निस्तुलं ह्यसुलभं देवाङ्गनानामपि।
> एतस्मादधिकं तपःफलमहो किं स्यान्न तद् बुध्यते॥

(क्षणं विचार्य आत्मगतम्) एष किल मे मनसो वितर्कः–

(प्रकटम्) अयि पार्वति—अपि ते इदं तपः उपयन्तारम् प्राप्तुम् । (पार्वती निश्वसिति ) अनेन ते उष्णनिश्वसितेन निवेदितः तव मनोरथः । परं तदर्थं तपसा च किम् । अतुलसौदर्यशालिनीं महत्कुलसम्भूतां रत्नभूतां त्वां को न कामयेत् । अपि तन्नाम वेदितुं शक्नोमि । कोऽसौ विचारमूढ य एवं प्रार्थितोऽपि तव उपेक्षां करोति ।

पार्वती—(सखीम् .अवलोकयति)

जय—शृणोतु द्विज-श्रेष्ठः ।

यस्य पदाम्बुजमधु पातुं मधुपा अमरा हि भवंति मुदा
मणिवंधभुजाग्रीवादेशे विलसंति सदैव महाफणयः ।
बालशशी भाले रमते, सुरशैवलिनी यन्मूर्ध्नि रता
मदनारिरसावनया हि वृतो निजमानसदेवगृहे निहितः ।।

शंकरः—(साश्चर्यम्) किं चिताभस्मलिप्ताङ्गः नररुण्ड-मालाधारी त्रिलोचनः अस्याः प्रणयविषयः सञ्जातः । नाहं विश्वसितुं शक्नोमि । अयि गिरिजे, अपि एतत् सत्यम् अथवा केवलं परिहासोऽयम् ।

पार्वती—द्विजोत्तम सत्यमेव श्रुतं भवता । मनोरथास्तु अकुण्ठितगतयो भवन्ति । उच्चैः पदप्राप्त्यर्थम् एव एतत् तपोऽनुष्ठानम् ।

शंकरः—अनुमन्तुं न शक्नोमि । क्व अमङ्गलवस्तुप्रणयी शंकरः क्व च उच्चैःकुलसम्भूता पुण्यलक्षणा भवती । कुलं, रूपं, विभवम् एतत् त्रयं वरार्थिनीभिः मृग्यते । शङ्करे तु एकम् अपि न दृश्यते । स हि अलक्ष्यजन्मा । तस्य विरूपाक्षस्य किं रूपं वर्ण्यते । दिगम्वरत्वम् एव तस्य विभवं दर्शयति । अतः एवंभूतः शङ्करः तव प्रणयविषयो भवितुं नार्हति । पन्नगवल-

यांकितं तस्य करं ग्रहीतुं तव एष कमलकोमलः करः कथं पुरः सरति । एषा विडम्बना अपि त्वया नोपलक्षिता यत् तेन त्रिनेत्रेण सह वृद्धोक्षम् अधिष्ठितां त्वाम् अवलोक्य सर्वे जनाः उपहसिष्यन्ति । अश्लाघ्यं खलु तवैतद् ईप्सितम् । निःसार्यताम् हि तत् स्वमनसः ।

पार्वती–(सरोषम्)–त्रैलोक्यनाथं तं हरं भवान् सम्यक् न वेत्ति । अत एव एवं नृशंसं भाषते । मन्दमतयो महात्मनां चरितानि निन्दन्ति । नृत्यं कुर्वतः तस्य अङ्कात् च्युत चिताभस्म सुरगणैः अपि एव विशुद्ध्यर्थं स्वाङ्गेषु विलिप्यते । दिगम्बर इति ख्यातः वृद्धोक्ष-वाहनो हि सः ऐरावतादवतीर्णेन देवेन्द्रेण सप्रश्रयं प्रणम्यते । स हि विश्वमूर्तिः तस्य रूपस्य का विचारणा स्यात् । यो हि जगत्प्रभवकारणं तस्य प्रभवः केन लक्ष्यते । अलम् अतिविवादेन । यथा स्यात् तथा अस्तु स मे आराध्यदेवः । प्रणयो वचनीयतां न सहते, अतो नेच्छामि श्रोतुं किमपि अस्मिन् विषये ।

शंकरः–अयि पार्वति–श्रुणु तावत् ।

पार्वतीः–(सरोषम् उत्थाय) सखि जये !

बटुममुं निवारय शीघ्रं वक्तुमुत्सुकम् ।
उत्सहे न महतां श्रोतुं घोरगर्हणम् ।।
कुरुते यो महतां निन्दाम् यः श्रुणुते तस्मादुदिताम्
दोषिणावुभावपि नूनम् । सममसंशयम् ।।१।।
दृश्यते न चायं गच्छन् । निन्दनात् च महतां विरमन्
अहमेव हि गच्छाम्यधुना । काननान्तरम् ।।२।।

(गन्तुं पदम् उत्क्षिपति)

शंकरः–(निजस्वरूपं प्रकटीकृत्य) अयि गिरिराजकन्यके, पश्य माम् । अयम् अहं ते दासः तव तपोभिः अत्र आनीतोऽस्मि ।

प्रीतोऽस्मि अनेन ते निश्चलेन विशुद्धेन च प्रेमभावेन । अद्य प्रभृति अहं तव एव जातोऽस्मि ।

**पार्वती:**–अनुगृहीतास्मि । अद्य खलु मे भाग्योदयः जातः ।

(गगनात् देवैः पुष्पवृष्टिः क्रियते)

(**नेपथ्ये देवाः**–पार्वतीपरमेश्वरौ विजयेताम् ।)

**जयाविजये**–अतीवमङ्गलमयः दिवसः अद्य उदितः । भवतोः इदं प्रणयमीलनं जगन्मङ्गलाय भवतु ।

**शंकरः**–तथास्तु–अपि अस्ति किंचित् अन्यत् प्रियं करणीयम् ।

**जयाविजये**–इदानीम् एवम् एव प्रार्थ्यते ।

(भरतवाक्यम्)

भवगुरो ! क्रियतां नोऽवनम् । पदनतानाम् ।।ध्रु।।

दानवबलमतिभयकरमदयम्
सम्प्रति जगतीं ग्रसितुमुद्यतम्
उन्मील्य च निजललाटनयनम्
क्रियतां त्रिभुवनवैरिविदहनम् ।।१।।

दुर्भिक्षादिव्यसनपीडिता
संत्रस्तेयं भारतजनता
भवत्यद्य सा त्वत्पदविनता
क्रियतां दूरं तद्‌दुर्व्यसनम् ।।२।।

भारतगौरवह्रासहेतुकम्
अपनय तदखिलदूषणजातम्
तेजोबलधृतिसुयशोभिस्तम्
भगवन् भूषय कृपया तूर्णम् ।।३।।

**शंकरः**–तथास्तु ।

समाप्तम् ।

# श्रीकृष्ण-दौत्यम्

---

(रागः हमीरः)

## मङ्गलाचरणम्

कृष्णो निवसताम् । हृदि नः, कृष्णो निवसताम् ।।
मनसि वचसि काये रमतां नो देवः प्रीयताम् ।।ध्रु।।

हत्वा कंसप्रमुखान् दुष्टान् ररक्ष गोद्विजवृन्दं सुजनान् ।
चकार धर्मावनं, बहुविधाम्-लीलां सुन्दराम् ।।१।।

सखा पांडवानां यो भूत्वा कृष्णां प्रियभगिनीमिव मत्वा ।
ररक्ष लज्जां तस्याः, कृत्वा-खलु तां निर्भयाम् ।।२।।

अत्र मयेदं माधवदौत्यम् वर्णितमच्युतकृपया विमलम् ।
अधुना छात्रगणैरभिनीतम्-सुजनैर्दृश्यताम् ।।३।।

कौरवराजसभायां हरिणा पुरस्कृतासीत्सामयोजना ।
मन्यन्ते स्म न ते मतिहीनाः तस्य प्रार्थनाम् ।।४।।

अपनेतुं फाल्गुनसम्मोहम् कथितं तस्मै गीताज्ञानम् ।
उपकृतमखिलं येन हि विश्वम् श्रीशो विजयताम् ।।५।।

## प्रथमः प्रवेशः

भीमः–आर्य दुर्योधनेन प्रहितः सन्देशः अत्रभवता महाराजेन श्रुतः किम् ।

युधिष्ठिरः–अथ किम् ! युद्धेन विना अस्माकं राज्यं प्रत्यर्पयितुं स नेच्छति ।

भीमः–तत् प्रथममेव मया अभिहितम् । दुर्योधनस्य सदृशः हि स सन्देशः । अधुना किं चिन्तयति महाराजः ?

युधिः—व्यसनकाले श्रीकृष्णः एव अस्माकं गतिः । स एव अधुना अस्मान् मार्गं दर्शयिष्यति । अतः समया अत्र आहूतः । अचिरेण एव स अत्र आगमिष्यति इति अहं मन्ये । पश्चात् अयं प्रश्नः पुनर्विमर्शनीयो भविष्यति ।

भीमः—(अवलोक्य) एष भगवान् श्रीकृष्णः द्रौपद्या सह आगतः ।

(द्रौपद्या सह श्रीकृष्णः प्रविशति)

युधिः—देव आगम्यताम्, चिन्तितोपस्थितोभवान् । अनुगृहीतोऽस्मि । गृह्यताम् इदम् आसनम् ।

श्रीकृष्णः—अहं तु भवतां स्नेहवन्धने निवद्धोऽस्मि । भवद्भिः चिन्तितः सन् अहं कथं न आगच्छेयम् । अपरं च—

यद्यत्काले स्मरति भवतां कोऽपि मां प्रेमभावात् ।
तत्तत्काले स्फुरति हृदयं गूढभावैर्ममेदम् ।
आविर्भूय प्रणतमुखराः कुन्तला याज्ञसेन्याः
मामाकृष्य स्वगतिकथनैरानयन्त्यत्र सद्यः ।

कथ्यताम् किमर्थम् अहं स्मृतोऽस्मि ।

युधिः—हस्तिनापुरात् प्रत्यागतेन दूतेन अधुनैव सन्देशं आनीतः । युद्धेन विना सुयोधनः अस्माकं राज्यं प्रत्यर्पयितुं नेच्छति ।

श्रीकृष्णः—तर्हि किं कर्तव्यम् अधुना ।

भीमः—योद्धव्यम् ! किमन्यत् । नान्यः उपायः विद्यते ।

युधिः—परम् एकवारं पुनः सन्ध्यर्थं प्रयत्नः कार्यः । अविचारतः किमपि न कर्तव्यम् अस्माभिः ।

भीमः—युद्धेन विना नान्या गतिः । अस्माकं सर्वे सन्धि-

प्रयत्नाः विफलीभविष्यन्ति ।

**श्रीकृष्णः** –महाराजः युधिष्ठिरः किं मन्यते ।

**युधि** :–भगवता श्रीकृष्णेन स्वयम् एकवारं सामप्रयत्नः करणीयः इति मे मतिः ।

**भीमः** –एतत् सर्वं निष्फलं भविष्यति । बाल्यादेव अस्मान् नाशयितुं तेन विविधाः प्रयत्नाः कृताः । अन्यायेन तेन अस्माकं राज्यलक्ष्मीः अपहृता । अधुना स अनीतिमान् अधमाधमः तां प्रत्यर्पयितुं कथं तत्परः भविष्यति । अपरं च अस्माकं दोर्दण्डेषु कालम् अपि जेतुं क्षमं बलं विद्यते । तर्हि दीनवत् एषा याचना किमर्थं करणीया ?

**श्रीकृष्णः**–महाराजस्य आज्ञया अहं हस्तिनापुरं गन्तुं सन्नद्धोऽस्मि परं, सर्वस्वनाशं प्रति अविचारतः गच्छन्तं पदं प्रतीपयितुम् असम्भवम् अस्ति ।

**युधि** :–बान्धवैः सह युद्धं न कस्यापि हिताय भवेत् । अतः यावत् शक्यं युद्धम् अवरोद्धुम् अस्माभिः उद्योगः कार्यः । देव, पाण्डवाः पञ्चग्रामैः सन्तुष्टाः भविष्यन्ति । यदि सुयोधनः अर्धराज्यं दातुं नेच्छति तर्हि पञ्चग्रामाः तस्मै याचनीयाः ।

**भीमः**–किं पञ्चभिः ग्रामैः सन्धि कर्तुम् इच्छिति युधिष्ठिर-महाराजः । तर्हि धिक् अस्माकं बलम् । धिक् क्षत्रियत्वम् ! हा हन्त ! ––

> पुरा यद्बाहुभ्याममितनृपलक्ष्म्यो हि विजिताः
> जरासन्धो भग्नः खलनिशिचरास्ते विदलिताः ।
> इमौ मे दोर्दण्डौ बत विहतशक्ती इव कथं
> सहेते निःशब्दं परमहह तेजःक्षयमिमम् ।।

अपि महाराजः कृष्णायाः मुक्तकेशान् न स्मरति । अहं तु तत् विस्मर्तुं न शक्नोमि । पुरा मत्कृता प्रतिज्ञा न कदापि अन्यथा

भविष्यति । देवि द्रौपदि, अहम् अद्य पुनः प्रतिज्ञां करोमि ।

तं सानुजं कुरुपतिं समरे निहत्य
कृत्वोरु–युग्ममनया गदया च भग्नम् ।
दुःशासनस्य रुधिरेण तवालकान्स्ता–
नालिप्य बन्धनयुताननघे करोमि ॥

द्रौपदी :—समाश्वसितु नाथः । जानामि यत् भवता स्व-प्रतिज्ञा अवश्यं पूरिता भवेत् । अरिरुधिरेण मे केशाः अवश्यं संयमिताः भविष्यन्ति । (श्रीकृष्णं प्रति) प्रिय भ्रातर्, महाराजस्य इच्छया भवान् हस्तिनापुरं सुखं गच्छतु । परम् एते मे केशा भवता कदापि विस्मृताः न भविष्यन्ति इति अहम् आशासे ।

श्रीकृष्णः—प्रियभगिनि चिन्तां मा कुरु । तवावमानना विस्मर्तुं न शक्या । महाराजस्य आज्ञया मया एकवारं सन्धिप्रयत्नः अवश्यं कार्यः । किन्तु जानामि सम्यग् दुर्योधनम् । यथा पतङ्गः अग्नेः उपरि पतति तथा द्विजशापग्रस्तः स मूढमतिः युद्धाय अवश्यं सन्नद्धः भविष्यति । अपरं च शकुनिकर्णादयः तस्य दुर्मन्त्रिणः निजदुर्मन्त्रेण तं मृत्युमुखे अवश्यं पातयिष्यन्ति । प्रिय भीमसेन, शान्तिं धारय । तव प्रतिज्ञा अवश्यं सफलीभविष्यति । तथापि महाराजस्य आज्ञया मया सामप्रयत्नः अवश्यं करणीयः । महाराज, के पञ्च ग्रामाः याचनीयाः ।

युधि :—इन्द्रप्रस्थं वृकप्रस्थं जयन्तं वारणावतं च एतान् चतुरः ग्रामान् कमपि च पञ्चमं ग्रामं भवान् यच्छतु इति सुयोधनाय कथनीयम् भवता ।

श्रीकृष्णः—तथा ।

युधि :—मातरं गान्धारीं, मातरं कुन्तीं, पितामहं भीष्मं, गुरुं द्रोणं तातं धृतराष्ट्रं, तातं विदुरं च प्रति अस्माकं सर्वेषां

प्रणामा: प्रापयितव्या: ।

श्रीकृष्ण: –अवश्यमेव । गच्छाम्यहम् ।

युधि: –शुभास्ते पन्थान: ।

---

## द्वितीय: प्रवेश:

### (दुर्योधनस्य प्रासाद:)

दुर्योधन :–मातुल, अपि श्रुता भवता दूतेन आनीता वार्ता?

शकुनि :–न श्रुता । का पुन: सा वार्ता ।

दुर्यो :–अस्माकं निमन्त्रणम् अनादृत्य स शिशुपालकघातक: पाण्डवानां दूत: कृष्ण: विदुरगृहं भोजनार्थं गत: ।

शकुनि: –एतत् मया पूर्वम् एव तर्कितम् । अनेन हि तस्य राजकार्यपटुता धूर्तता च प्रकटीभवत: ।

दुर्यो :–अधुना पाण्डवै: प्रत्यक्ष: श्रीकृष्ण: दौत्येन प्रहित: । किंकर्तव्यमूढा भवति मे मति: । किं करणीयम् स्यात् ।

कर्ण: –तत् हि पूर्वमेव अस्माभि: निश्चितम् । युद्धं विना राज्यभाग: सर्वथा न देय: । युद्धे अस्मान् विजित्य पाण्डवै: स्वराज्यं प्राप्तव्यम् इति श्रीकृष्णाय स्पष्टं कथयितव्यम् ।

शकुनि: –श्रीकृष्ण: अतीव मधुरालापी अस्ति । स्वभाषणेन स: मायावी अस्मान् मोहयेत् कदाचित् । अपरं च कपटप्रबन्धे स: अतीव निपुण: अस्ति ।

य: कालं मुचकुन्दकोपवहने नीत्वा दरीं दग्धवान्
द्विर्भग्नश्च वृकोदरेण मगधाधीशो हि यस्येङ्गितै: ।
भूपानां परिपश्यतां बलवतां वै राजसूयाध्वरे
चैद्यो येन हत: स पाण्डवसखा दौत्यार्थमत्रागत: ।।

तर्हि सावधानतया अस्माभिः वर्तितव्यम् ।

दुर्योः–युद्धे समुपस्थिते श्रीकृष्णः पाण्डवान् अवश्यं साहाय्यं करिष्यति । कृष्णबलेन संयुक्ताः पाण्डवाः सामर्थ्यशालिनः अजयाः च भविष्यन्ति ।

कर्णः–न भेतव्यं भवता । मयि त्वत्सहाये सति किमर्थं तव एषा चिन्ता ।

दुर्योः–तव एव बलेन अहं पाण्डवानां विरोधं करोमि । एते भीष्म-विदुर-द्रोणाः पाण्डवानाम् एव कुशलम् इच्छन्ति । शरीरैः ते अत्र सन्ति किन्तु तेषां मनांसि पाण्डवैः साकं वर्तन्ते । न मे तेषु विश्वासः ।

कर्णः–निश्चिन्तो भव । अयं श्रीकृष्णः स्वयमेव एकाकी अत्र आगच्छति । तर्हि सः प्रथममेव किं न बन्धने गृहीतव्यः । कृष्णे बन्धनंप्राप्ते पाण्डवा मृतप्राया भविष्यन्ति ।

शकुनिः–यदि आवश्यकः, एष उपायः अपि अवश्यं करणीयः ।

दूतः–(आगत्य) देव, महात्मना विदुरेण सह श्रीकृष्णः राजसभां शीघ्रमेव आगमिष्यति ।

दुर्योः–तर्हि वयं तत्रैव गच्छामः । (सर्वे प्रस्थिताः)

---

## तृतीयः प्रवेशः

दुर्योः–भगवतः वासुदेवस्य वयं सहर्षं स्वागतं कुर्मः । निवेद्यतां यदि वयं कामपि भवत्सेवां कर्तुं योग्याः ।

**धृतराष्ट्रः**–वासुदेव, अपि मे पुत्रकाः पाण्डवाः सपत्नीकाः कुशलिनः सन्ति ।

**श्रीकृष्णः**–राजन्, सर्वे कुशलिनः सन्ति । भवत्सहितान् सर्वान् पाण्डवैः सादरप्रणामः मन्मुखेन भणितः ।

**धृतः**–उचितमेव एतत् तेषाम् अद्य खलु वासुदेवस्य चरण-रजोभिः एषा सभा पाविता । कस्मात् कारणविशेषात् अद्य भवतः अत्र प्रस्थानम् अभवत् तत् श्रोतुम् इच्छामः ।

**श्रीकृष्णः**–भवन्तः सर्वे जानन्ति एव यत् पाण्डवैः स्वकृत-पणः सयशः पूर्णतया सम्पादितः । अधुना अस्माकं राज्यभागः अस्मभ्यं तूर्णं देयः इति तेषां सविनयप्रार्थना अस्ति ।

**धृतः**–जात सुयोधन, अस्मिन् विषये किं चिन्तितं भवता । भवता उचितम् एव कर्तव्यम् ।

**दुर्यो:**–अस्माभिः न किंचिदपि अनुचितं कृतम् । पाण्डवैः प्रतिज्ञा पूर्णतया न पालिता इति वयं मन्यामहे । अतः ते राज्यं याचितुं न अर्हन्ति ।

**श्रीकृष्णः**–अलीकम् एतत् । पाण्डवाः न्यायप्रियाः सत्व-शालिनः सत्यप्रियः च सन्ति । तेषां नीतिविरुद्धम् आचरणं कदापि सम्भवनीयम् न भवेत् ।

> धर्मज्ञाः खलु पाण्डवाः सुकृतिनः सन्नीतिमन्तो बुधाः
> दीनानां परिपालकाः खलु सतां सेवापरा निःस्पृहाः ।
> स्वाराज्यर्थमपि त्यजन्ति सहसा सन्नीतिमार्गं न ते
> वीरा बिभ्रति नो भयं लवमपि प्रत्यक्षकालादपि ॥

अतः तेषां प्रार्थना अवश्यं चिन्तनीया ।

**शकुनिः**–अस्माभिः पूर्णतया सर्वमेव चिन्तितम् अनन्तरं च

निश्चितम् । पाण्डवाः राज्याय योग्याः न सन्ति ।

**श्रीकृष्णः**—धृतराष्ट्र महाराज ! पितामह भीष्म, गुरुवर्य द्रोणाचार्य, अन्ये च सभ्याः, श्रूयताम् । दुर्मन्त्रितः अयं दुर्योधनः पाण्डवान् प्रति महान्तम् अन्यायं करोति । अस्य पापकर्मणः परिणामः न कदापि शोभनः भवेत् । यथा पाण्डवाः तथैव कौरवाः अपि मे प्रियाः सम्बधिनः च सन्ति । अहम् उभयोः शुभं चिन्तयामि । अतः पुनर्वदामि, पाण्डवानां राज्यभागः तेभ्यः तूर्णं देयः इति ।

**कर्णः**—युद्धं विना राज्य प्रत्यर्पयितुं दुर्योधनः कदापि सिद्धः न भविष्यति ।

**विदुरः**—अस्य दुराग्रहस्य परिणामः कौरवाणाम् अनिष्टकारकः भविष्यति । पाण्डवाः धर्ममार्गानुसारिणः सन्ति । अपरं च श्रीकृष्णः तेषां सखा । एतत् चिन्तनीयम् ।

**कर्णः**—वयं पाण्डवेभ्यः सकृष्णेभ्यः न विभीमः ।

**विदुरः**—अलमेतेन प्रलपनेन । अपि स्मर्यते घोषयात्राप्रसङ्गः युष्माभिः ।

> गन्धर्वैर्विजिताः स्वपाशविधृता बन्दीकृतास्ताडिता
> एते कर्णसुयोधन-प्रभृतयो निर्लज्जवीरब्रुवाः ।
> श्रुत्वैतद्धि युधिष्ठिरेण सदयं संप्रेष्य भीमार्जुनौ-
> शत्रुभ्यः खलु मोचिताः । कथमलं जेतुं ह्यमी पाण्डवान् ॥

**श्रीकृष्णः**—युधिष्ठिरः युद्धाय अनुत्सुकः अस्ति । न कस्मादपि भयात्, अपि तु कुलघातं निवारयितुम् । अतः स साम्नि तत्परः अस्ति । युधिष्ठिरेण केवलं पञ्चग्रामाः याचिताः । दीयन्तां ते तेभ्यः । निवार्यताम् अयं विनाशकारी कलहः ।

दुर्यो—युद्धं विना सूच्यग्रमितामपि भूमिं न दास्यामि, किं पुनर् अर्धराज्यम् ।

मद्भाग्यं द्विषतां बलाच्छलयतामस्मान् शिशुत्वे सदा
सौद्धत्यं मयमन्दिरे विहसता मां भीमशक्तेर्मदात्
सम्प्राप्ता स्वधियो बलेन हि मया लक्ष्मीररीणामियं
सा युद्धेन विना भवेत् कथमहो प्रत्यर्पिता शत्रवे ।।

श्रीकृष्णः—बाढम् आत्मनाशाय तत्परोऽसि । अतः नास्ति कापि अन्या गतिः । अस्तु एतत् । गच्छामि ।

दुर्यो—कृष्ण तत्रैव स्थीयताम् । सेवकाः, गृह्यताम् असौ बन्धने कारागारे च स्थापयितव्यः ।

भीष्मविदुरौ—महान् अनर्थः, महान् अनर्थोऽयम् । धृतराष्ट्र अवरुन्धि एनं कुलघातकम् । अन्यथा शिशुपालवधस्य पुनरावृत्तिः अत्र सुनिश्चितं भविष्यति ।

श्रीकृष्णः—(विहस्य) न भेतव्यम् युष्माभिः । मां गृहीतुं न कोऽपि समर्थः । जम्बूकोपमा एते उत्तरगोग्रहणप्रसङ्गे एकाकिनमपि नरशार्दूलं पार्थं जेतुम् असमर्थाः । अपि तु तेन हि पराजिताः कृष्णीभूतमुखाः ततः प्रयागताः । कथम् एते वराकाः माम् अवरोद्धुं समर्थाः । दूरीतिष्ठन्तु ते ये स्वकुशलम् इच्छन्ति ।

धृत—दुष्ट दुर्योधन, मा रुन्धि वासुदेवम् । भगवन् श्रीकृष्ण, क्षाम्यतु भवान् माम् । एते मूर्खाः न जानन्ति तव प्रभावम् । सुखेनैव गच्छतु भवान् । कथ्यतां पाण्डवेभ्यः यत् तैः धर्मानुसरणं यथापूर्वं सदैव कर्तव्यम् ।

श्रीकृष्णः—तव अयम् अनीतिमार्गगामी पुत्रः एव अस्मै उपदेशाय योग्यः अस्ति । पाण्डवाः आजन्मधर्मशीलाः सन्ति । अधर्मवृत्तिस्तु तान् दूरादपि न स्पृशति । धर्माज्ञया मया एषः

सन्धिप्रयोगः कृतः। कौरवाः एव दोषभागिनः। ते आत्मनः दुष्कर्मणां फलम् अवश्यं प्राप्स्यन्ति। समाप्तं मे कार्यम्। ईश्वरो हि एतेभ्यः मूढकौरवेभ्यः सद्बुद्धिं प्रदद्यात्। गच्छामि अधुना। (निर्गच्छति)

### ईशस्तुतिः
### (भैरवी)

प्रभुपदे प्रेम्णा प्रणमनम्। बालकानाम्।
जगत्पावनं पादस्मरणम्। सपदि कुर्वतां दहत्यघवनम्
पदप्रपन्नश्छात्रगणोऽयम्। पाहि विभो तं शरणापन्नम् ॥१॥
त्वमेव साक्षात् विश्वविधाता। त्वमेव भर्ता विलयं कर्ता
चराचराणां जीवनदाता। त्वमेव सर्वेषामसि शरणम् ॥२॥
भारतभूराप्नोतु सत्वरम्। प्राग्वैभवममलं च गौरवम्
भारतयूनामेतत्साध्यम्। कुरु तत्कार्ये सुयशोदानम् ॥३॥
वितर दयाब्धेऽस्मासु सन्मतिम्। दृढनिश्चयमथ सत्यप्रीतिम्।
मातृभूमिरतिममलां कीर्तिम्। अपनय सुखहां कुमतिं तूर्णम् ॥४॥

—— ——

# भरत-भावम्

---

## नान्दी

प्रणतिरियं श्रीकान्तम् । अनाद्यन्तमजमव्ययमीशम् ।। ध्रु०।।
दशमुखदासीभूतान् देवान् । मोचयितुं हर्तुं भूभारान् ।
अभयीकर्तुं गोद्विजसंघान् । अवतीर्णं भुवि देवम् ।
धृतनरविग्रहमजितमनीशम् ।।१।।
हरगलगतगरगुरुरुक्शमनम् । हृतनतजनभयमद्भुतचरितम् ।
प्रजारञ्जने त्यक्तनिजसुखम् । प्रजावत्सलं भूपम् ।
एकेषुस्त्रीवचनव्रतिनम् ।।२।।

## प्रथमः प्रवेशः

कैकेयी (चिन्तामग्ना प्रविशति)

विषममति विधिलिखितं कथितम् ।
विमृश्यन्त्या ननु मयापि बहुधा । न च ज्ञायते खलु तद्रूपम् ।।
मया वीक्षितः स्वप्नो योऽयम् । न च ज्ञायते मया तत्फलम् ।
नेष्यति शुभमथवा विपरीतम् । सर्वमीश तत्खलु तेऽधीनम् ।।

आर्यपुत्रस्य वार्तामानेतुं प्रेषिता मन्थरा अद्यापि न निवृत्ता। न जाने कस्मिन् कार्यविशेषे मग्नः अस्ति तत्रभवान् आर्यपुत्रः। द्वे दिने व्यतीते, आर्यपुत्रस्य दर्शनमपि न सञ्जातम्। एनम् अकारणविलम्बं सोढुं मे मनः मनागपि समर्थं नास्ति। प्रिय-वत्सस्य आगमनवेलापि अतिक्रान्ता।

रामः-(प्रविश्य)-अयमहम् आगतोऽस्मि। मातः अभिवन्दे।

कैकेयी-जात, चिरञ्जीव।

रामः-मातः, क्षम्यतां मे विलम्बः। मातृपददर्शनार्थं यावदहं प्रस्थितः तावत् तत्रभवता महाराजेन अहम् आज्ञप्तः यत्

प्रथमं मया वसिष्ठगुरोः सकाशं गत्वा तस्य उपदेशः सम्यक् श्रवणीयः इति । मातृपदवन्दनं कृत्वा अहं सपदि गुरूपदानि उपगमिष्यामि इति तस्मै अभिधाय अहम् अत्र आगतोऽस्मि ।

**कैकेयी**—वत्स अतीव प्रीतास्मि अनया ते भक्त्या । मातुलावासं गतयोः भरतशत्रुघ्नयोः वियोगः अपि मम विस्मृतप्रायः जातः ।

**रामः**—अद्य मातृवदनं कयापि चिन्तया व्याकुलीभूतम् इव दृश्यते ।

**कैकेयी**—अतिस्नेहः पापशङ्की इति यत् कथ्यते तत् न अलीकम् ।

**रामः**—अलं वंचनेन । न एवम् अहं वारयितुं शक्यः । चिन्ताङ्कुरेण मातृहृदये पदं कृतम् इति स्फुटं दृश्यते । ज्ञातव्यं हि मया मातृदुःखस्य कारणम् । मातरि चिन्तामग्नायां धिग् रामस्य जीवनम् ।

**कैकेयी** (आत्मगतम्) —अहो स्नेहस्य सूक्ष्मदर्शिता । (प्रकटम्) जात सत्यम् अहं चिन्तामग्ना अस्मि । रात्रौ मया भयंकरः स्वप्नः दृष्टः ।

**रामः**—अहो स्वप्नः । श्रावणीयः हि सः ।

**कैकेयी**—भवन्तः चत्वारः अपि भ्रातारः वल्कलवेषधारिणः भूत्वा अयोध्यां परित्यज्य अरण्याय प्रस्थिताः । नृपमन्दिरस्य स्वर्णकलशः अपि तस्मिन्नेव क्षणे भूमौ न्यपतत् । इत्येवं दृष्ट्वैव उच्चैः आक्रन्दन्ती अहं शयनात् उत्थिता । ततः प्रभृति एवं व्याकुलीभूतं मे मनः । नाहं मत्पुत्रान् वल्कलवेष्टितान् द्रष्टुं शक्नोमि ।

**रामः**––मात्रा मनागपि चिन्ता न कार्या । यद् भावि तद् अन्यथाकर्तुं कः अलं भवेत् । तथापि केवलं स्वप्नदर्शनमात्राद् एव धीरैः धैर्यं न त्याज्यम् । अपि च, आसन्नवर्ति किमपि सङ्कटमपि न दृश्यते । निःसार्यताम् एषा चिन्ता स्वमनसः । अनुज्ञायताम् वसिष्ठगुरोः सकाशं गन्तुम् ।
(अभिवादयति)

**कैकेयी**––वत्स चिरञ्जीव । (रामः निर्गच्छति) युवराजपदम् अलंकर्तुं मे वत्सः योग्यः जातः । आर्यपुत्रे अत्रागते एव युवराजपदे रामम् अभिषेक्तुं तस्मै साग्रहं कथयिष्यामि ।

**मन्थरा**––(प्रविश्य) तत् हि भर्त्रा पूर्वमेव निश्चितम् ।

**कैकेयी**––किं मे वत्सः रामः युवराजपदे अभिषेक्तव्यः ।

**मन्थरा**––अथ किम् । श्वः प्रभाते एव यौवराज्याभिषेकोत्सवः सम्पन्नः भविष्यति ।

**कैकेयी**––प्रियं त्वया कथितम् । वद किं ते प्रियं करोमि । ब्रूहि ते वाञ्छाम् । किं ते देयम् ।

**मन्थरा**––अस्ति खलु । प्रथमं वचनं देहि ।

**कैकेयी**––राजमहिष्याः शब्दः एव प्रतिज्ञा ।

**मन्थरा**––तेन हि साकेतराजमातुः सखी भवितुम् इच्छामि ।

**कैकेयी**––रामे राजनि जाते अहं राजमाता भविष्यमि एव ।

**मन्थरा**–(विहस्य) दासमाता अवश्यं भविष्यसि ।

**कैकेयी**–दुष्टे, पापिनि, किम् एवम् अभद्रवचनानि ब्रवीषि । अस्मिन् महोत्सवकाले मा अपशकुनं कुरु ।

**मन्थरा**–त्वम् एवम् अज्ञानावृता असि इति न ज्ञातं मया । अयि मुग्धे पश्य इदम्–रामः ते सपत्नीपुत्रः, न तु तवोदरजातः ।

रामे राजनि जाते कौसल्या राजमाता भविष्यति । तदा कः त्वां बहुमंस्यते । कौसल्यायाः दासीवत् त्वां सर्वे द्रक्ष्यन्ति । त्वदात्मजः भरतः राज्यात् बहिष्कृतः भवेत् अथवा बन्दिगृहे पतिष्यति ।

**कैकेयी**—सर्वाः एताः ते कपोलकल्पनाः । अकारणभीता दृश्यसे त्वम् । भरते रामस्य अतीव स्नेहः अस्ति । सः तेन दुर्व्यवहारं कदापि न करिष्यति । आर्यपुत्रस्य ममोपरि अतीव प्रीतिः अस्ति इति त्वं जानासि एव ।

**मन्थरा**—प्रीतीः ? आसीत् खलु । परम् अद्य सा न दृश्यते । पुरा तवानुमतिं विना महाराजः कस्मिन्नपि कार्ये प्रवर्तितुं नैच्छत् । परम् अधुना विपरीता दशा दृश्यते । अन्यथा तवानुमतिं विना यौवराज्योत्सवः महाराजेन कथं निश्चितः । अपरं च एतदपि विचारणीयम् । भरते मातुलगृहे गते एव एष उत्सवः निश्चितः । अपि नैतत् महाराजस्य क्षयिण्याः प्रीतेः लक्षणम् ?

**कैकेयी**—कदाचित् सत्यं स्यात् त्वत्कथनम् । परं किं क्रियते अधुना । त्वत्कथनं कम्पयति मे हृदयम् । अपि अस्ति कश्चित् उपायः एतम् अनिष्टं निवारयितुम् ।

**मन्थरा**—किमेवं सम्भ्रान्तासि । स्वाधीनोपायासि त्वम् ।

**कैकेयी**—कथम् स्वाधीनोपाया । अतिगूढं भाषसे त्वम् । स्फुटं ब्रूहि ।

**मन्थरा**—अपि स्मरसि यद् देवदैत्यानां युद्धे महाराजस्य स्यन्दने स्थितया त्वया भग्नरथाक्षः दृढं गृहीतः ।

**कैकेयी**—आम् स्मरामि खलु तत् ।

**मन्थरा**—त्वत्प्रसङ्गावधानात् प्रीतेन महाराजेन तुभ्यं द्वौ वरौ प्रतिज्ञातौ ।

कैकेयी—आः स्मृतम्, स्मृतं सर्वम् । सत्यम् अहं विस्मृतवती तौ वरौ । आर्यपुत्रस्य प्रीतिमयात् व्यवहारात् नासीत् ताभ्यां मे प्रयोजनम् । अधुना ताभ्यां किं करणीयम् ?

मन्थरा—तौ वरौ त्वया अत्रैव याचितव्यौ ।

कैकेयी—परं महाराजस्य अत्र आगमनं कथं भवेत् ।

मन्थरा—विस्रब्धा भव । महाराजम् अहं शीघ्रम् आनयामि । त्वं तावत् कोपागारं गत्वा विकीर्णकेशा इतस्ततः विलुठन्ती भूमिशायिनी भव ।

कैकेयी—ताभ्यां वराभ्यां किं याचितव्यं मया ।

मन्थरा—एकेन वरेण भरतस्य कृते यौवराज्यं, द्वितीयेन च राम चतुर्दशवर्षाणि वने निवसतु इति याच्यताम् ।

कैकेयी—आः किम् एवम् ब्रवीषि ?—

कथं दुर्गिरां भाषसे निर्घृणे । कथं प्रषणीयो हि रामो वने ॥
सदा पुत्रवद्यो मया मानितः । स्नेहामृतेनैव संवर्धितः ॥
कथं युज्यते हा विहातुं सुतं । वदैतत्कृते मे कथं स्यात् सुखम् ॥
सुदक्षो हि यो मे वचः पालने । कथं प्रेषणीयो हि रामो वने ॥

तर्हि पृच्छामि तावत् यदि रामः अत्र एव स्थास्यति तर्हि किम् अनिष्टं भवेत् ।

मन्थरा—तत् हि अतीव अहितकरं भवेत् । यौवराज्यात् बहिष्कृतः रामः भरताय द्रुह्येत् । तस्मिन् अत्र उपस्थिते भरतः सुखेन राज्यं कर्तुं समर्थः न भविष्यति । शिरसि निहितसर्पस्य कथं सुखनिद्रा स्यात् । अत एव हि सः वने अवश्यं प्रेषणीयः । भरतस्य हितार्थमेव अप्रियमपि एतत् कर्तुं सन्नद्धा भव । मा एवं दुर्बलहृदया भव । किंचित् धैर्यं धारय ।

**कैकेयी**—सत्यं भणसि । सम्प्रति मया किं करणीयम् ।

**मन्थरा**—कोपागारं गत्वा कोपाभिनयं कुर्वंती तिष्ठ ।

**कैकेयी**—तथा । अहम् अधुनैव तत्र गच्छामि ।

**मन्थरा**—अहमपि भर्तारम् आनेतुं प्रस्थितास्मि ।

---

## द्वितीयः प्रवेशः

[भूमौ शयाना कैकेयी तस्याः अनुनयं कुर्वाणः दशरथःच प्रविशतः।]

**दशरथः**—प्रिये कैकेयि, पश्य, अयमहं त्वच्चरणान्तिकम् आगतोऽस्मि । किमर्थं ते ईदृशी अवस्था । किं च कोपागार-प्रवेशकारणम् । पुष्पशय्यां परित्यज्य एवं भूमौ शयितुं नार्हसि । किमेवम् अकारणकोपः दासस्योपरि ।

मैवं कुरु कोपं मयि हृदयवासिनि !
किमकारणमेव भवसि भूमिशायिनी ? ॥ध्रु०॥
वदनेन्दुस्तव कान्ते ! । खिन्नतां च किं भजते ॥
का चिन्ता त्वां दुनुते । कथय भामिनि ! ॥१॥
अपराद्धस्त्वयि को हि । झटिति सुतनु ममाख्याहि
ध्रुवं दण्डयामि तं हि । हृदयनंदिनि ! ॥२॥
रामशपथमधुनाहम् । कृत्वा सखि तव कामम् ॥
पूरयामि सुनिश्चितम् । मंजुभाषिणि ! ॥३॥

**कैकेयी**—अलम् अलम् एतैः शर्करावगुण्ठितैः वचनैः । सम्यग् जानामि यत् साम्प्रतम् अहम् आर्यपुत्रस्य अप्रीतिभाजनं जाता इति ।

**दशरथः**—कथं ज्ञातम् एतत् त्वया । अहं तु पूर्ववत् एव त्वत्प्रेमाकुलः अस्मि । अपि कश्चित् महापराधः ज्ञानतः अज्ञानतः वा कृतः अनेन ते दासेन । अहं किल तर्कयितुं न पारयामि ।

यद्यस्ति चेत् मे कश्चित् अपराधः तर्हि क्षन्तुम् अर्हसि।

कैकेयी–अतीते द्वे दिने कस्मिन् कार्यविशेषे संलग्नः आसीत् आर्यपुत्रः येन अहम् अत्रभवतः मुखदर्शनात् वञ्चिता।

दशरथः–सत्यम् अहम् एकस्मिन् कार्यविशेषे मग्नः आसम्। तेन हि अत्रागन्तुं नाशक्नवम्।

कैकेयी–अपि अहं तत्कार्यविशेषं ज्ञातुम् अर्हामि। प्रत्यवायः न चेत् कथ्यताम्।

दशरथः–धीरा भव। सत्वरं ज्ञास्यसि सर्वम्। तवापि प्रियमेव तत्।

कैकेयी–अहो आश्चर्यम्। मत्प्रियम् अपि मह्यम् अधुना शंसितुं न शक्नोति आर्यपुत्रः।

दशरथः–त्वत्तः किं गोपनीयम् स्यात्। तत्रभवता वसिष्ठ-गुरुणा वत्सः रामचन्द्रः यौवराज्यपदे अभिषेक्तव्यः इति अहम् आदिष्टः। तस्मात् तदनुष्ठातुं कार्यमग्नः अहम्।

कैकेयी–एतादृशी महती वार्ता अद्यावत्कालपर्यन्तम् आर्यपुत्रेण मत्कर्णे न पातिता। नाहम् आर्यपुत्रस्य विश्वास-स्थानम्। हा हन्त! वञ्चितास्मि खलु आर्यपुत्रेण।

दशरथः–किमेवम् असम्भवनीयम् आभाष्यते। मद्हृदये तव स्थानं पूर्ववत् अचलम् अस्ति। न कोऽपि त्वां ततः प्रभ्रंश-यितुं समर्थः भवेत्। किं करणीयं भवत्संशयनिरसनार्थं मया?

कैकेयी–अपि महाराजः मे किञ्चित् प्रियं कर्तुं मन्यते?

दशरथः–नेदं शङ्कनीयम्। प्राणत्यागेऽपि त्वत्प्रियकरणात् अहं न विरमिष्यामि।

कैकेयी–तर्हि दीयेतां मे भवत्प्रतिज्ञातौ वरौ।

दशरथः–ब्रूहि किमिच्छसि। न मे किमपि तुभ्यम् अदेयम्।

कैकेयी–एवम् याच्यते मया। एकेन वरेण भरतः युवराजपदे स्थापयितव्यः।

दशरथः–गुर्वाज्ञायाः प्रजेच्छायाः च विरोधि एतत् कार्यम्। यदि एष एव ते आग्रहः तदपि मया कर्तव्यमेव भवत्सन्तोषार्थम्। दत्तो मया एष वरः। अन्यः अपि उच्यताम्।

कैकेयी–अन्येन वरेण वल्कलवेषधारी रामः चतुर्दशवर्षाणि वने निवसतु।

दशरथः–हा! किं शृणोमि एतत्। कर्णौ बधिरौ भवतम्। कैकेयि! किमेवं जल्पितम्। खरतमं गरलं मे कर्णयोः पातितं त्वया। वररूपेण एषः अशनिपातः मद्हृदये कृतः। आर्ये प्रसीद। मा मा एवं निष्ठुरा भव। भरतः राजा भवतु। न मे कोऽपि आक्षेपः अस्मिन् विषये। परम्–

मा प्रेषय रामं विपिनम्।
मा मैवं द्रुनु मम हृदयम्॥ध्रु॥
चारुशीलविनयादिसद्गुणैः।
प्रीणयते गुरुजनान् सु–भावैः॥
प्रियः प्रजानां यः शुभचरितैः।
मा त्यज तं निजबालम्॥१॥
भक्तियुतं गुरुपदानुरक्तं।
सकलमातृसमवृत्ति सदयम्॥
कोमलमतिमतिकोमलकायम्।
सज्जननयनानन्दम्॥२॥
बहिश्चरो यः खलु प्राणो मे।
अन्धकरगता यष्टिर्यो मे॥
पातयसि हि किं तमेव विषमे।
अदयं मा कुरु हृदयम्॥३॥

कैकेयी–मत्तः अपि रामः भवतः प्रियतरः दृश्यते । ज्ञातं मया पूर्वमेव यत् भवता स्वप्रतिज्ञा पूर्णतां कदापि नेया न भविष्यति । रघुकुलजाः सत्यसन्धाः इति श्रूयते तत् अलीकम् इव दृश्यते । भवतु । यदि मत्कथनं न क्रियते तर्हि अनुचितं मे अत्रावस्थानम् । हा हन्त ! अधुना मे जीवनमपि असाम्प्रतम् इव सञ्जातम् । मातः शरयु, आगच्छामि अधुना भवदन्तिकम् । देहि मे त्वदुत्संगे स्थानम् ।

दशरथः–प्रिये ! किमेवं कुरुषे । रामं विना अहं जीवमपि धारयितुम् अक्षमः इति त्वं जानासि । न कामये अहं तदर्थं यौवराज्यम् । सः केवलं मत्समीपम् अयोध्यायां तिष्ठतु । सः तव किमपि अप्रियं न करिष्यति ।

कैकेयी–रामस्य मम च अयोध्याथाम् एकत्रावस्थानं न शक्यम् । यदि भवान् मत्प्रियं कर्तुम् इच्छति, यदि भवतः मया किमपि प्रयोजनं तर्हि रामेण वनं गन्तव्यमेव ।

दशरथः–पापिनि, रामेण ते कः अपराधः कृतः येन त्वं तं वनं प्रेषयसि । निर्मलधिया रामेण न कस्यापि किमपि विप्रियं कृतम् । त्वच्चरणयोः पतितोऽहम्, दयां कुरु । रामं वनं मा प्रेषय, अन्यत् किमपि याच्यताम् ।

कैकेयी–रामः वनं गच्छतु अथवा अहं शरयू–शरणा भवामि ।

दशरथः–हा हन्त ! (मूर्च्छितः पतति)

कैकेयी–(ससम्भ्रमम्) आर्यपुत्र, समाश्वस्यताम्–अहम्–

मन्थरा–(प्रविश्य किमेतत् क्रियते । अलम् अनेन मोहेन ।

कैकेयी–मन्थरे, महाराजः विसंज्ञः सञ्जातः । अधुना किं

करणीयम् ।

**मन्थरा**–न भेतव्यम्–किमपि अनिष्टं न भवेत् । अल्पकालं धैर्यं मा त्यज । स्वनिश्चयात् लवमपि मा विरम । अन्यथा आमरणं पश्चात्तापं करिष्यसि । सावधाना भव । अयं तव सुतस्य सपत्नः अत्र एव आगच्छति । (रामः प्रविशति)

**रामः**–तात ! आः किमिदम् । कथम् एवं तातः निपतितः। विसंज्ञः इव दृश्यते । किं जातम् । मातः, एतां दशां किं प्राप्तः महाराजः ।

**कैकेयी**–(केवलं निश्वसिति)

**रामः**–मन्थरे-अपि किञ्चित् निवेदयितुं शक्नोषि ?

**मन्थरा**–नाहं विशेषज्ञा । एतत् किल जानामि यत् पुरा भर्त्रा द्वौ वरौ मत्स्वामिन्यै प्रतिज्ञातौ । तौ तया अद्य याचितौ ।

**रामः**–कौ तौ वरौ ?

**मन्थरा**–एकेन वरेण भरतः युवराजपदे स्थापनीयः इति ।

**रामः**–अतिसुलभं हि तत् । तस्मिन् न किञ्चिदपि अनिष्टं प्रतिभाति । दत्तो मया एष वरः । अपरः कथ्यताम् ।

**मन्थरा**–अपरेण तु–

**रामः**–कथ्यताम् कथ्यताम् । मा बिभिहि ।

**मन्थरा**–अपरेण तु भवान् वल्कलवेषधारी भूत्वा चतुर्दशवर्षाणि वने निवसतु । एतत् श्रुत्वा भर्ता विसंज्ञः सञ्जातः ।

**रामः**–पितृवचनं मया अवश्यं पालनीयम् । एतदपि मया सहर्षम् अङ्गीकृतम् । सूर्योदयात् प्राक् एव राम : अयोध्यां संत्यज्य वनमार्गे पदं करिष्यति । मातः तातं समाश्वासय । एषः अहं

वनाभिमुखं गच्छामि । दीयतां मे भवदाशीः । (प्रणमति) मन्थरे मार्गं दर्शय । (गच्छति)

मन्थरा—यथाज्ञापयति देवः ।

---

## तृतीयः प्रवेशः

मन्थरा—(प्रविश्य) दिष्ट्या रक्षितास्मि मृत्युसंकटात् । भयरोमांचिता मे तनुः अद्यापि कम्पते । हृदयम् अपि भयेन स्पन्दते । क्रोधाभिभूतस्य सौमित्रस्य मे शरीरं दहती खदिराङ्गारान् वमती नेत्रे अद्यापि मे दृष्टिगोचरे भवतः इव । मत्सखी-मनोरथः भ्रष्टप्रायः एव आसीत् परं सत्यप्रतिज्ञेन रामेण तद्भयं सपदि निवारितम् । सफलीभूतो मे कपटप्रबन्धः । सीता-लक्ष्मणाभ्यां सहितः रामः वनं गतः । अत्र एकमेव अनिष्टं सञ्जातम् । रामवियोगम् असहमानः महाराजः परलोकं गतवान् । मृत्युं निरोद्धुं कः प्रभवेत् । अधुना कैकेयी राजमाता संवृत्ता एव । नेदं शङ्कनीयम् । अतः परं ममापि प्रभावः अस्मिन् राजकुले वर्धेत । भवतु । राजमातुः कैकेय्याः सान्त्वनां कर्तुं मया गन्तव्यम् । अधुना—कः अयम् । अये, एष मातुलसदनात् प्रतिनिवृत्तः भरतः मातृमन्दिरं प्रविशति । रामे अतीव स्नेहः अस्य । न जाने किमसौ विधास्यति । परं कथमपि सः सानुकूलः कर्तव्यः । (निर्गच्छति।)

---

## चतुर्थः प्रवेशः

कैकेयी—वत्स भरत । समाश्वसिहि । यद्भावि तद् भवत्येव। पुत्रस्य हितसाधनम् मातुः कर्तव्यम् । तत् मया कृतम् । त्वत्कल्याणमेव अस्मिन् कर्मणि मे प्रेरकं सञ्जातम् ।

**भरतः**—परं रामं वनं प्रेषयन्त्या त्वया किं मे हितं साधितम् इति ज्ञातुं न शक्नोमि । अपि न जानासि यत् आर्ये रामे मम प्राणेभ्यः अपि अधिकः स्नेहः । तस्मिन् वनं गते कथं राज्यभोगे मे रतिः स्यात् । रामं वनं प्रेषयन्त्या त्वया मद्घातः एव कृतः । हा तात, राम, क्षन्तव्यः अहं भवता । अनेन मे जननीकृत्येन अहमेव दोषभाक् सञ्जातोऽस्मि । नाहं खलु अपराधी । नाहं राज्यं कामये । अहम् अपि त्वाम् अरण्ये अनुसरामि । भो पूज्य तात ! मृत्युसमये अहं भवतः पाददर्शनमपि कर्तुम् असमर्थः आसम् । कथं भवान् मां विसृज्य स्वर्गं प्रयातः ।

**कैकेयी**—वत्स भरत मा शोकं कुरु । बुद्धिमता गतं न शोचनीयम् । राजनि स्वर्गे, रामे च वनं गते त्वया राज्यभारः स्वशिरसि गृहीत्वा प्रजापालनं कर्तव्यम् । प्रजापालनं क्षत्रियस्य प्रथमं कर्तव्यम् । पश्य एष राजकिरीटः तव मूर्धानम् अलङ्कर्तुं समुत्सुकः अस्ति । गृहाण इमम् । राजसिंहासने उपविश्य स्वकुलोचितं राजकर्तव्यं कुरु । त्वां राजसिंहासनाधिष्ठितं द्रष्टुमहं इच्छामि । जात एषा अहं ते जन्मदा त्वाम् अभ्यर्थते ।

**भरतः**—अपेहि—

अपसर दूरम् । न च जननी त्वं मे नूनम् ॥
रामो गच्छतु काननमिति या ।
वच उदीरयति निष्ठुरहृदया ।
कलंकिता निजपदवी हि यया ।
हा हा ! कष्टम् । दूषितं स्वजननीनाम् ॥१॥
स्वयंरोपितं स्नेहवर्धितम् ।
छेत्तुमुद्यता त्वं सुतवृक्षम् ।
भवेत्कथं हा चैतत् श्लाघ्यम् ।
उद्यता कर्तुम् । त्वं तदेव निन्द्यं कार्यम् ॥२॥

अजानती निजपत्युर्हृदयम् ।
पुरःसृता तद्घाताय त्वम् ।
त्वया दूषितं पत्नीनाम ।
धिक् धिक् धिक् त्वाम् । पतिपुत्रघातिनीमदयाम् ॥३॥

नाहं तव पुत्रः न च त्वं मे जननी । पुत्रस्य मानसं न जानन्ती कथं तस्य माता भवितुम् अर्हति । यत्र रामः तत्र अहमपि गमिष्यामि । वल्कलवेषधारिणि रामे वने भ्रमति कथं राज्यभोगे मम प्रीतिः स्यात् । आर्य राम, अयम् अहं त्वच्चरणान्तिकम् आगच्छामि । (गच्छति)

कैकेयी–भरत–मा गच्छ मा गच्छ! एतत् शृणु । आः निर्गतः सः । मन्दभाग्या खलु अहम् । पत्या पुत्रेण च अपि परित्यक्ता–हा हन्त! (निपतति)

---

## पञ्चमः प्रवेशः

रामः–वत्स लक्ष्मण, स्नानार्थं पयोष्णीं गता जानकी अद्यापि कथं न निवृत्ता ।

लक्ष्मणः–स्नानं समाप्य आर्या अत्रागन्तुं प्रस्थिता । यावत् सा कञ्चित् मार्गम् आक्रान्तवती तावत् कतिपयाः तपस्विरमण्यः तामुपेत्य साग्रहं तां स्वाश्रमदर्शनार्थं नीतवत्यः । तासाम् आतिथ्यं स्वीकृत्य सा सपदि आगच्छेत् इति अहं मन्ये । परं किमेतत्–(अवलोक्य) आः– एष भरतः ससैन्यः इतोमुखः आगच्छन् दृश्यते अस्माकं नाशाय बहुधा कनिष्ठजनन्या सः प्रेषितः भवेत् । तस्य प्रतिकारार्थं आवाभ्यां सज्जी-भवितव्यम् ।

अरण्ये राज्यलोभाद्वै वयं सम्प्रेषिता मात्रा ।
तथाप्यासीन्न तृप्तिर्हा कठोराया अहो तस्याः ।।
वनस्था अप्यकृपया हा ! तया सोढा वयं नैव ।
अतश्चास्मान् निहन्तुं वै तयैष प्रेषितो मन्ये ।।
प्रतीकारो हि कर्तव्योऽधुनाऽस्मान् हन्तुकामस्य ।
अनुज्ञा दीयतां मह्यं निराकर्तुं रिपोर्यत्नम् ।।

**रामः**—प्रतिकारः अनावश्यकः । भरतस्य हृदयेन अहं सम्यक् परिचितोऽस्मि । किं तस्य अस्मद्विग्रहेण । शत्रुभावेन सः कदापि न आगच्छेत् । गच्छ साग्रहं सस्नेहं च तं ममान्तिकमानय ।

**लक्ष्मणः**—एष भरतः समागतः एव ।

(भरतः प्रविश्य रामचरणौ वन्दते, रामः तं परिष्वजति)

**रामः**—वत्स चिरञ्जीव ! अस्मिन् आसने उपविश । अतीव प्रीतोऽस्मि तव दर्शनेन । किमर्थम् एष दीर्घः प्रवासः अङ्गीकृतः त्वया । मार्गश्रमात् अतीव श्रान्तः इव दृश्यसे । अपि सर्वेषां कुशलं विद्यते ?

**भरतः**—आर्य भवता त्यक्तानां केषां कुशलं स्यात् । पूज्य-तात चरणाः स्वर्लोकं प्रयाताः ।

**रामः**—हा ! किं शृणोमि । हा तात । मद्वियोगम् असहमानः भवान् इहलोकं परित्यज्य स्वर्गं प्रयातः । भावी केन निवार्यते ।

**भरतः**—आर्य मम मन्दभाग्यस्य कृते भवान् मे मात्रा राज्यात् निःसारितः । मन्दमत्या तया मद्हृदयस्थः भावः न लक्षितः । जानाति एव भवान् यत् मद्हृदये राज्यलालसा विभवलालसा वा मनागपि न विद्यते । क्षम्यतां मे मातुः अपराधः । निवर्त्यताम् अयोध्याम् । अहं भवन्तम् अयोध्यां प्रतिनेतुम् समागतोऽस्मि ।

**रामः**—जानामि ते स्नेहं खलु । परं मे अयोध्यां प्रति गमनं न शक्यम् । चतुर्दशवर्षाणि वने व्यतीत्य एव अयोध्याम् आगमिष्यामि ।

भरतः--यदि भवान् मत्प्रार्थनां न अङ्गीकरोति तर्हि अहमपि भवता सह वने एव निवसिष्ये । अयोध्या स्मशानभूरिव मे प्रतिभाति । अहं तत्र न गमिष्यामि ।

रामः--एतत् न युज्यते । यतः--

पितृवचनमवश्यं पालनीयं हि पुत्रैः ।
किमपि न विपरीतं तद्विरोधे विधेयम् ।।
जगति किमपि नान्यत् श्रेयसे विद्यते नः ।
रघुवरकुलजानां माऽन्यथा स्युः प्रतिज्ञाः ।।

यथा पितृवचनपालनार्थम् अहं वनम् आगतोऽस्मि तथा त्वयापि पितृवचनं पालनीयम् । अस्मद्विधानां चरितानि आदर्शानि स्युः । सामान्यजनाः नेतॄणां चरितानि एव अनुकुर्वन्ति । अतः पित्राज्ञया त्वया प्रजापालनं कर्तव्यम् ।

भरतः--यदि एषा एव भवदाज्ञा तर्हि अहं तां पालयिष्यामि । परं दीयतां मे एकं वचनम् ।

रामः--किं तत् ।

भरतः--चतुर्दशवर्षावसाने भवता अयोध्यां पुनरागत्य राज्यभारः गृहीतव्यः ।

रामः--तथा--

भरतः--यदि चतुर्दशवर्षान्ते भवदागमनं न भवेत् तर्हि अहम् अनलं प्रवेक्ष्यामि । दीयतां मे भवत्पादुके, तयोः प्रतिनिधित्वेन अहं राज्यशासनं कुर्वन् नन्दिग्रामे स्थास्यामि ।

रामः--धन्योऽसि भरत! महान् खलु ते त्यागः । सन्तुष्टोऽस्मि अनेन ते सद्वृत्तेन । भविष्यत्काले जनाः एतत् तव यशः यावच्चन्द्रदिवाकरौ वर्णयिष्यन्ति ।

भरतः--मन्मातुः अपराधः क्षन्तव्यः ।

रामः--ममापि सा माता । मातृचेष्टितं यद्यपि प्रतिकूलम् तथापि पुत्रैः तत् न निन्दनीयम् । विधातुः इच्छा बलीयसी । एतत् सर्वं विधिविधानम् । केनापि महता हेतुना विधिना अहं वनम् आनीतः । माता तु केवलं निमित्तमात्रं बभूव । विधातुचेष्टितानि सर्वथा अज्ञेयानि । अतः मातृदोषोच्चारणं पुनः न करणीयम् । गच्छ यशस्वी भव । बहुकालं राज्यात् दूरे स्थातुं न योग्यम् । गच्छ यथान्यायं प्रजापालनं कुरु ।

भरतः--(लक्ष्मणं प्रति) आर्य महान् भाग्यवानसि । चतुर्दश वर्षाणि त्वया आर्यचरणानां सान्निध्यम् अनुभवितव्यम् ।(रामं प्रति) भवदाज्ञया निवर्तेऽहम् । दीयेतां मे भवत्पादुके । (रामः पादुके यच्छति )

भरतः(ते गृहीत्वा]-अनुगृहीतोऽस्मि ।

रामः--शुभास्ते पन्थानः । किमन्यन् ते प्रियं करोमि ।

भरतः--भवत् कृपया एतत् भरतवाक्यं भवतु ।

भरतवाक्यम् ।

पाहि विभो ! जगतीम् । अधुना ।
स्वार्थपरायणनृशंसलोकात्
रक्ष रक्ष धरणीम् ।। अधुना ।। १ ।।
बन्धुद्वेषो मास्त्विह लोके
वितरकृपासरणीम् ।। अधुना ।। २ ।।
दानवताया लोपो भूयात्
वारय दुष्करणीम् ।। अधुना ।। ३ ।।
करोतु मानवताया उदयः
स्वर्गसमामवनीम् ।। अधुना ।। ४ ।।

रामः--तथास्तु ।

---

# सत्त्व-परीक्षणम्

## (श्रियाल-चरितम्)

### प्रथमः प्रवेशः

(कैलासे श्रीशंकरः ध्यानस्थः दृश्यते । इन्द्रादिदेवगणाः स्तुतिं कुर्वन्ति)

जय जय हे विश्वनाथ । करुणार्णव भूतनाथ ।।ध्रु०।।
गिरिजाधव गंगाधर । उरगपाळ शशिशेखर ।
जय जय हे प्रमथनाथ ।।१।।
शरणागतभयहारिन् । आशुतोष शुभकारिन् ।
जय जय गजवदनतात ।।२।।
उन्मीलय नयनयुगम् । सकृप पश्य भक्तगणम् ।
जय जय हे उमानाथ ।।३।।

इन्द्रः–(स्तवनान्ते) भोः जगतः पितः, वयम् अमरगणाः ते शरणं प्रपन्नाः । पाहि नः । स्वदृष्टिसुधया अस्मान् पावनीकुरु ।

शंकरः–(नेत्रे उन्मील्य)अये अमरेन्द्र:! देवगणा:! स्वागतं भवताम् । चिरात् भवताम् आगमनं सञ्जातम् । मन्ये भवतां सर्वेषां कुशलं विद्यते । कस्मात् कारणविशेषात् भवदागमनं सञ्जातम् ?

इन्द्रः–देवाधिदेव, वयम् अद्य कृतार्थाः भवत्पदकमल-दर्शनेन । वाह्यतः अस्माकं कुशलं विद्यते । परं साम्प्रतं अभूतपूर्वा महती विचित्रा च चिन्ता मन्मनः व्यग्रीकरोति ।

शंकरः–उच्यतां भवच्चिन्ताकारणम् । अपि कोऽपि मद्वरोन्मत्तः दुर्जनः पुनरपि भवतः पीडयति ?

इन्द्रः–नैवं नैवम् । साम्प्रतं तादृशाः जगत्पीडाकराः दुर्जनाः

न दृश्यन्ते । परं किमपि अज्ञातभयकारणम् उद्भूतम् इव दृश्यते। न जाने किं स्वर्लोकवासिनः मृत्युलोकवसतिं चिकीर्षन्तः तत्र गच्छन्ति । स्वर्लोकः तिरस्कृतः इव तिष्ठति ।

पार्वती–अहो विचित्रेयं वार्ता । कथम् एतत् सम्भूतम्? अपि मृत्युलोकः स्वर्लोकादपि सविशेषं वासयोग्यः आकर्षकः च सञ्जातः येन स्वर्लोकवासिनः तत्रत्यां वसतिं कामयन्ते ?

इन्द्रः–तथ्यं ज्ञातुं मया नारदः मृत्युलोकम्प्रति प्रेषितः । अचिरेण एव स प्रत्यागत्य तत् कथयिष्यति । (नेपथ्ये-'नारायण' इति शब्दः श्रूयते । ) अहो नामसंकीर्तनसममेव देवर्षेः आगमनं सञ्जातम् ।

नारदः (प्रविश्य)–

मङ्गलमयमशुभहरं भक्तकामदम् ।
विश्वात्मानं स्मर हे मन उमाधवम् ।।ध्रु०।।
भक्तकामकल्पतरुम् । भालाक्षं कामारिम् ।
शशिशेखरमुरगमालमीशमव्ययम् ।।१।।
गङ्गाधरमखिलेशम् । विषकण्ठं वृषयानम् ।
याहि याहि शरणमाशु विश्ववन्दितम् ।।२।।

जगतः पितरौ वन्दे ।

शंकरः–देवर्षे: सुस्वागतम् । जगद्धिताय भवतु भवतः त्रैलोक्यसञ्चारः । कुतः आगम्यते । अप्यस्ति किंचित् कथनीयम्?

नारदः–अथ किम् । देवेन्द्रस्य अनुरोधात् अहं मृत्युलोकं गतवान् । अपूर्वतेजोयुक्तां पुण्यलक्षणां विभवसौख्यसम्पन्नां सर्वदुःखविहीनां भुवं दृष्ट्वा अहं विस्मयापन्नः अभवम् ।

शंकरः–अहो आश्चर्यम् । अपि ज्ञातम् अस्याः अश्रुतपूर्वायाः घटनायाः कारणम् ?

**नारदः**—भगवन् एष हि भवतः भक्तानां भक्तिप्रभावः। कान्तिनाम्न्यां नगर्यां श्रियालः नाम नृपालचूडामणिः राज्यं करोति। अतीवसत्त्वशीलः हि असौ। असंख्ययज्ञकृता तेन स्वदाक्षिण्यादिगुणैः न केवलं स्वप्रजाः सन्तोषिताः अपि तु अखिला धरणी स्वशीलौदार्यादिगुणप्रभावेण सम्भूषिता। न कोऽपि अतिथिः तस्य गृहात् विमुखः याति। सुनीतिमान् स नृपतिः स्वप्रजाः न केवलं पुत्रवत् पालयति अपि तु ताः धर्म-मार्गानुसरणं कारयति। चांगुणा नाम तस्य महिषी पतिवत् धर्मशीला सत्त्वशीला च अस्ति। तयोः आत्मजः चिलया केवलं सत्त्वमूर्तिः इव राजते।

**शंकरः**—अहो धन्यः खलु अयं नृपः। अवश्यं दर्शनीयः हि सः।

**पार्वती**—अहमपि द्रष्टुमिच्छामि तस्य पत्नीम्। तादृशाः सच्छीलवत्यः सत्वशीलाः स्त्रियः यस्मिन् लोके वसन्ति तमेव स्ववासेन भूषयन्ति।

**इन्द्रः**—देवाधिदेव, स्वर्लोकः अपि भवता रक्षणीयः। यदि भवत्-कृपा न भवेत् तर्हि अचिरेण एव स्वर्लोकः शून्यः भवेत्। एवंभूते मे देवेन्द्रत्वं केवलं नाममात्रं सम्भवेत्। एतदपि विमर्शनीयम्।

**शंकरः**—न भेतव्यम्। अयं मे भक्तः तव अनिष्टं कदापि न करिष्यति। अहम् अद्युनैव कान्तिनगरीं गत्वा तस्य सत्त्वपरीक्षां करिष्यामि। यदि तस्य सत्त्वं व्यवस्थितं स्यात् तर्हि सपरिवारं तं मल्लोकम् आनेष्यामि।

**पार्वती**—सम्यग् उदितम्। एतादृशैः सत्त्वशीलैः महाभागैः अस्माकम् अयं कैलासप्रदेशः अधिकतरः शोभनीयः पावनः च भवेत्।

शंकरः–परम् अस्यां परीक्षायां यदि सः असफलः जायते तर्हि ?

नारदः–अभङ्गं खलु तस्य सत्त्वबलम् । पर्वतः इव सः स्वसत्त्वे स्थास्यति ।

शंकरः–तत् हि अहम् अधुनैव पश्यामि । प्रस्थितः अहं कान्तिनगर्यं ।

इन्द्रः–स्वाभिन् ! कृतार्थाः स्मः वयम् ।

नारदः–नारायण! देवेन्द्र! गच्छामः ।

---

## द्वितीयः प्रवेशः

श्रियालः–दिष्टया सानन्दं संपन्नः अद्य कुमारस्य जन्मदिनोत्सवः । प्राप्ताः अस्माभिः महर्षीणाम् आशिषः । किन्तु देवि किमर्थं त्वम् एवं खिन्ना असि ?

चांगुणा–नाथ ! न जाने किं मे मनः कयापि शंकया व्याप्तम् अस्ति । कुमारस्य जन्मदिने ज्योतिर्विदा यद् भविष्यं कथितं तद् भवान् स्मरति किम् ?

श्रियालः–स्मरामि खलु तत् । ईशेच्छा बलीयसी । यद् भावि तद् भविष्यति । चिन्तां मा कुरु । मृत्युंजयः सदाशिवः अस्माकं कल्याणम् एव करिष्यति । तर्हि निस्सार्यताम् एषा चिन्ता स्वमनसः ।

चांगुणा–यत्नं कृत्वा अपि एषा चिन्ता मन्मनः न त्यजति । अद्य कुमारस्य अष्टमः जन्मदिनोत्सवः । अद्य एव तद् भविष्यम् मे मनः व्यग्रीकरोति ।

श्रियालः–देवि, सदाशिवस्य भक्तानाम् अनिष्टं कदापि न भवेत् । तर्हि चिन्तां दूरीकुरु । अद्य शिवप्रसादं गृह्णतां जनानां शुभाशिषः कुमारं रक्षिष्यन्ति । परम्––अधुना न कोऽपि अप्राप्त-प्रसादः विद्यते इति मे मतिः ।

राज्ञी–तथापि द्वारपालम् आहूय सम्यग् ज्ञातव्यम्-यदि कश्चिद् अपि अवशिष्यते तर्हि तद् अस्माकं लाञ्छनास्पदं भवेत् । सत्त्वहानिः अपि सम्भवेत् ।

राजा–सुष्ठु भणितं देव्या । कः कोऽत्र द्वारि । (द्वारपालः प्रविशति) अपि त्वया सर्वत्र मन्निदेशानुसारतः घोषणा कृता वा न वा ?

द्वारपालः–देवस्य आज्ञया सर्वत्र घोषणा कृता । आबाल-वृद्धाः आब्राह्मणशूद्राश्च सर्वे नागरिकाः अत्र समागत्य सानन्दं शिवप्रसादं गृहीतवन्तः ।

राज्ञी–अपि त्वया सम्यग् ज्ञातं यत् न कोऽपि अगृहीतप्रसादः अद्यापि अवशिष्यते इति ?

द्वारपालः–अथ किम् । अधुना न कोऽपि एवम् अवशिष्यते । (नेपथ्ये-अलीकम् एतत् । अद्यापि एकः प्राणी अभुक्तप्रसादः अवशिष्यते)

राजा–कुतः एतत् प्रत्याख्यानं सम्भवति । यो वा को वा अपि जनः अभुक्तप्रसादः स्यात् सः मत्पुरः आगच्छतु ।

(भिक्षुवेषेण शंकरः प्रविशति)

राज्ञी–(जनान्तिकम्) अहो भयंकरवपुर्धारी एष नवागतः । अस्य बीभत्सस्य निर्गता कर्कशावाणी मद्हृदये भयम् उत्पादयति ।

राजा–(जनान्तिकम्) अहो विचित्रविग्रहोऽयम् । अस्य बीभत्सस्य दर्शनमपि मनसि भयम् अरुचिम् च उत्पादयति । परम्

अप्रियरूपधारी अपि अयम् अतिथिः मम पूजार्हः अस्ति। (प्रकटम्) पूज्य अतिथे आगम्यताम्।

**भिक्षुः**–(विहस्य) अनाहूतः अपि अहम् आगतोऽस्मि।

**राजा**–अतिथयः सर्वदा स्वागतार्हाः अस्मिन् राजप्रासादे।

**भिक्षुः**–राजन् तव आज्ञाकारिणः स्वकार्यदक्षाः न सन्ति इति स्फुटं दृश्यते। राजभिः अनवधानैः न भवितव्यम्।

**राजा**––क्षम्यताम् मे अपराधः। आगम्यताम् अत्र आसने च उपविश्यताम्। (भिक्षुः उपविशति) आर्ये अतिथेः पाद-पक्षालनार्थं जलम् आनीयताम्। पदतीर्थं सेवावहे।

**भिक्षु**––कृतम् आदरेण। अहम् अतीव बुभुक्षितोऽस्मि। सपदि भोजनं मे दातव्यम्।

**राजा**––भोजनं सिद्धम् एव। आर्ये अन्नपात्रम् आनीयताम्।

**राज्ञी**––तथा–( अन्नपात्रम् अतिथिपुरतः स्थापयति।)

**राजा**––सानन्दं सावकाशं च भोजनं क्रियताम्। यदि किमपि अत्र न्यूनं स्यात् तद् उच्यताम्–तद् देवी परिवेषयिष्यति।

**भिक्षुः**––नाहं वाञ्छामि एतादृशं भोजनम्। अतिथिभ्यो इच्छा भोजनं त्वया दीयते इति श्रुत्वा अहम् अत्र आगतोऽस्मि।

**राजा**––उच्यताम् भवद्वाञ्छा। तां पालयितुम् आवां सन्नद्धौ स्वः।

**भिक्षुः**––प्रथमं वचनं देहि। शपथं कुरु।

**राजा**––जगत्पितुः सदाशिवस्य शपथं कृत्वा वचनं ददामि, यद् भवान् वाञ्छति तदेव दास्यामि। अन्यथा सपितृकः अहं नरकं प्रति व्रजिष्यामि।

**भिक्षुः**––मांसाशनम् इष्यते मया। देहि तत् मे।

**राजा**––(जनान्तिकम्) विचित्रेयं वाञ्छा खलु। मन्ये मत्सत्त्वपरीक्षणार्थम् एव केनापि देवेन अनेन वेषेण अत्र आगमनं कृतं भवेत्। (प्रकटम्) भवदाज्ञा प्रमाणम्। द्वारपाल, आनय मांसपूर्णं पात्रम्।

**भिक्षुः**–क्षणं विरम। नाहं यस्य कस्यचित् सत्त्वस्य मांसम् इच्छामि नरमांसम् इष्यते मया।

**राजा**–(जनान्तिकम्) सदाशिवः रक्षतु माम्। कस्य नरस्य मांसं प्रदेयम् अधुना? नरहत्यापापं कथं क्रियते मया? यदि एतद् न क्रियते तर्हि सत्त्वहानिः भवेत्। महति धर्मसंकटे पातितोऽहम्। दरीद्वयोर्मध्यस्थितोऽस्मि अधुना।

**भिक्षुः**––महच्चिन्तापरः इव दृश्यसे। अपि अपूरणीया मे इच्छा? यदि एतद् दुष्करं मन्यसे तर्हि कथय। अहम् अन्यत्र गच्छामि। तव सत्त्वशीलताम् आतिथ्यशीलतां च आकर्ण्य अहम् अत्र समागतः। सम्यक् प्रकटीकृते अतिथ्यशीलता सत्त्व-शीलता च।

**राजा**––भगवन् क्षम्यताम्। अहं सन्नद्धोऽस्मि। मद्देह-मांसेन भवतः क्षुधा शाम्यतु।

**राज्ञी**––नहि नहि–न युक्तम् एतत्। मद्देहमांसम् अर्पयामि। पत्युः सत्त्वरक्षणम् सहधर्मिण्याः कर्तव्यमेव। तत्कर्तुम् आज्ञापयतु महाभागः।

**भिक्षुः**––स्त्रीमांसं वर्ज्यं भवति।

**द्वारपालः**––तर्हि मद्देहमांसम् अङ्गीकरोतु अतिथिदेवः। स्वामिनः पिण्डेन मे देहः पुष्टिङ्गतः। तदर्थम् सर्वस्वस्य त्यागः एव उचितः। एतत् कर्तव्यं कृत्वा आनृण्यं गतः अहं सद्गतिं प्राप्स्ये।

**भिक्षुः**---अपेहि । भृत्यानामपि मांसं न इष्यते मया ।

**राजा**---तर्हि मद्देहेन स्वक्षुधां शाम्यतु भवान् ।

**भिक्षुः**---नाहं पापभागी भवितुम् इच्छामि । प्रजापालनम् राज्ञां धार्मिकं कर्तव्यम् । तव शरीरत्यागात् धर्महानिः भवेत् । तत् न युक्तम् ।

**राजा**---तर्हि किं कर्तव्यं मया ? यत् भवान् आज्ञापयति तदेव मया प्राणत्यागेऽपि करणीयम् ।

**भिक्षुः**---अस्ति तव अष्टवर्षीयः द्वात्रिंशल्लक्षणोपेतः सुलक्षणः सुललितविग्रहः आत्मजः । तं मह्यम् अर्पय ।

देहि मे झटिति तनय--मांसम् ।
नहि किमपीष्यते मयान्यच्चाशनम् ।।ध्रु।।

अस्ति ते प्रियतमो ह्यष्टवर्षीय आत्मजः ।
कुरु तं मदर्पणं भूप ! तूर्णम् ।।१।।

रुचिकरं सुललितं नूतनं ह्यनामयम् ।
अत्तुमिच्छामि रे तस्य मांसम् ।।२।।

नय पूर्णतां निजं सुशपथं त्वया कृतम् ।
अन्यथा ते भवेत् सत्त्वहरणम् ।।३।।

**राज्ञी**---(कर्णौपिधाय) हा हन्त! किमिदं श्रूयते । भिक्षोः मुखात् एष वाग्रूपी अशनिपातः सञ्जातः : । आवयोः एकः एव कुलवर्धनः पुत्रः । तस्मिन् नष्टे कुलमेव नश्येत् । पुत्रवती भूत्वा अपि अहम् अपुत्रवती भवेयम् । कठिना खलु इयं सत्त्वपरीक्षा! भो देवाधिदेव! गिरिजेश! रक्ष अस्माकं कुलम् । पाहि मे कुक्षिजातं प्राणप्रियं सुतम् । पूज्य सतीश्वर ! अहं तव कन्या इव । त्वा मत्पुत्रप्राणानां भिक्षां याचे । कृपां कुरु । मां मा पुत्रहीनां कुरु ।

कुरु करुणां कन्यायाम् । मा कुरु मा कुरु मां सुतहीनाम् ।।ध्रु.।।
एकमेव मे पुत्रः शुभ-धीः । वंश-विवर्धन एव गुणनिधिः ।।
प्राणप्रियमृजुशीलम् । मा हर मा हर सदय त्वं तम् ।।१।।
देहि दयालो म इमां भिक्षाम् । त्वां कुर्वेऽहं चैतां याच्ञाम् ।
कुलदीपं नश्चैनम् । सदय-विभो नय न च निर्वाणम् ।।२।।

भिक्षुः—(स्वगतम्) अस्याः करुणया वाचा मे हृदयं द्रवीभवति । नैतद्युक्तम् । क्षणं मया हृदयं कठोरं कर्तव्यम् । (प्रकटम्) राजन् त्वया शपथः कृतः । परिपालय स्वशपथम् । अन्यथा अहम् इतः गच्छामि । (गन्तुम् उत्तिष्ठति ।)

राजा—यतीश्वर! क्षणं स्थीयताम् । एतद् जन्मदायाः हृदयस्य आक्रन्दनम् । स्वांशं विहातुं कथं तत् सन्नद्धं भवेत् ? तथापि भवद्वाञ्छा अवश्यं पूरीक्रियते मया । क्षणं शान्तिः अवलम्ब्यताम् ।

राज्ञी—हा देव! सदाशिव! आशुतोष! कथं त्वं निज-भक्तान् उपेक्षसे । आर्तहृदयस्य मे करुणप्रार्थनं तव कर्णे न पतति किम् ?

धाव विभो तूर्णम् । शम्भो । धाव विभो तूर्णम् ।। ध्रु. ।।
त्वत्पदविनतान् विभो किंकरान् ।
ग्रसितुमुद्यतं घोरं व्यसनम् ।। १ ।।
सत्त्वरक्षणे वंशो नश्यति ।
वंशरक्षणे नश्यति सत्त्वम् ।। २ ।।
अनन्यशरणा विभो अहं ते ।
द्वयोरपि हि भो! क्रियतामवनम् ।। ३ ।।
अस्यां चित्रापदि पतिताऽहम्
पश्यामीह न मुक्तेर्मार्गम् ।। ४ ।।

चिलया—(प्रविश्य) अम्ब किमेवं रोदिषि? कथय ते

दुःखकारणम् । तातः अपि विषण्णवदनः दृश्यते । कः अयं विचित्रवेषधारी? किं वाञ्छति अयम्?

**राज्ञी**––वत्स ! (स्वगतम्) हा कथं किं च कथयामि अस्मै !

**चिलया**––कथं त्वं स्तब्धा असि? तात, भवानेव कथयतु । भवद्दुःखकारणं श्रोतुम् अहम् अतीव उत्कण्ठितोऽस्मि । हन्त, न कोऽपि उत्तरं ददाति । भो नवागत! कः अपि भवतु भवान् । यतिवेषात् भवान् मे वन्दनीयः । अतः अभिवादयामि । अपि भवान् मे पित्रोः दुःखं कथयितुं शक्नोति?

**भिक्षुः**––अहम् इच्छाभोजनं प्राप्तुम् अत्र आगतोऽस्मि ।

**चिलया**––इच्छाभोजनम्! किमत्र दुष्करम्? मातः किं वाञ्छति एषः अतिथिः ।

**राज्ञी**––कथं कथ्यते–अप्रियं मुखात् कथं निस्सरेत्!

**चिलया**––अप्रियम् अपि अतिथिसन्तोषार्थं नः सत्वरक्षणार्थं च कर्तव्यम् एव । तर्हि कथ्यताम् अस्य इच्छा ।

**राज्ञी**––अत्याग्रही मे वत्सः । किं करोमि? मनः दृढं कृत्वा सत्यं कथनीयम् एव । वत्स! स्वक्षुधानिवारणार्थम् अनेन त्वच्छरीरमांसम् इष्यते ।

**चिलया**––अपि एवम् ? तर्हि नासौ साधारणः भिक्षुः । कदाचित् ईश्वरः एव अस्य वेषेण अत्र आगतः इति अहं मन्ये ।

> भिक्षुर्न भाति चैषः । तद्रूपधृग्रमेशः ।
> सत्त्वं परीक्षितुं नः । किं वा ऽऽगतः सुरेशः ।
> अत्युग्ररूपधारी । किमयं स्वयं पुरारिः ।
> किं जीवितेश एषः । अथवा स्वयं परेशः ।
> दृष्ट्वापि चास्य रूपम् । मम कम्पते न चित्तम् ।

कौर्यावृतां च करुणाम् । लक्ष्यीकरोमि चैनाम् ।
तेनायमुपप्रवेशः । मम वन्दनीय एषः ।

यतीश्वर, अनुगृहीतोऽस्मि भवता । भवत्कृपया पित्रोः सत्त्वरक्षणार्थं मे शरीरस्य व्ययः भविष्यति । अयम् अहम् उपस्थितोऽस्मि भवत्पुरतः । तर्हि मच्छरीरेण आत्मनः क्षुधा शाम्यताम् ।

**भिक्षुः**—(स्वगतम्) कुमार! धन्योऽसि! सत्यं त्वं कुलोद्धारकः ! (प्रकटम्) नाहं वृकः व्याघ्रः वा तव अपक्वं मांसं खादितुकामः । राजन् एषा ते महिषी स्वहस्तेन एनं हत्वा तस्य मांसं पक्त्वा अत्र आनयतु ।

**राजा**—भो मनः कठोरं भव । सत्त्वरक्षणार्थं सत्यपालनार्थं च वज्ररूपं धारय । प्रिये अनुष्ठीयतां यतिवचनम् ।

**राज्ञी**—हा हन्त, कथं दुर्बलं मातृहृदयम् एतादृशं निष्ठुर कर्म आचरेत्! यतिश्रेष्ठ, पुनः प्रार्थयामि, मयि दयां कुरु । मन्नन्दनाय जीवदानं दत्वा मां कृतार्थां कुरु । अहम् अस्य जननी । कथं तस्य कुसुमकोमले काये शस्त्राघातं कर्तुम् अलं भविष्यामि ।

**भिक्षुः**—सुखं जीवतु ते पुत्रः । एषः अहं गच्छामि ।

**राजा**—प्रिये! हृदयं कठिनं कुरु । सत्त्वभङ्गो मा भवतु ।

**चिलया**—मातः न किमपि अत्र शोचनीयम् । प्राणिनां मृत्युः ध्रुवः इति त्वं जानासि । सत्त्वरक्षणार्थं प्राणानां व्ययः श्लाघ्यः । एषः तव हस्तः मां शिवसायुज्यं प्रापयतु। त्वदुत्संगात् उत्थाय मया मातुः गिरिजायाः अङ्के उपवेष्टव्यम् । अतः परम् किम् अन्यत् जन्म–साफल्यम्? पूज्य तात, शोकः मा क्रियताम् । धन्योऽहं खलु पितृसेवार्थं यस्य देहस्य विनियोगः । न खलु

शोचनीयो मे मृत्युः । अपरं च यत्तौ प्रीते सदाशिवः अपि अस्मासु अवश्यं प्रसन्नः भविष्यति । अतः सानन्दं मां यतिसेवार्थं समर्पयत ।

राज्ञी--(तं समाश्लिष्य) कथं बालमुखात् एतादृशी प्रौढा वाणी निस्सरति । वत्स, एतावत् ज्ञानं तव कुतः प्राप्तम्? मोहावृतमानसा इयं ते जननी त्वां प्रसूय धन्या जाता । परम् अतः परं त्वां विना अहं कथं जीवं धारयिष्यामि ।

राजा--आर्ये हृदयं स्थिरीकुरु । नान्या गतिः । सत्त्वरक्षणार्थे पुत्रः त्यक्तव्यः ।

चिलया--अम्ब, मा विलम्बं कुरु । अतिथिः अतीव बुभुक्षाकुलः दृश्यते ।

भिक्षुः--राजन् यदि पुत्रत्यागं कठिनं मन्यसे तर्हि कथ्यताम् । अहम् अन्यत्र गच्छामि ।

चिलया--एतस्माद् राजद्वारात् कोऽपि बुभुक्षितः विमुखः न याति । अयं मे देहः भवते समर्पितः । अतिथिः केवलं शिवः भाव्यते मया । तस्मिन् विमुखे याते किम् अनेन शरीरेण विभवेन प्राणैः वा । मातः, अलं शोकेन ।

मा प्रियजननि कुरु खिन्नताम् ।
समयोऽयं शुभदो ननु पुरत आगतः ।
भाग्यविवर्धनशीलः ॥ ध्रु० ॥

कर्तुं प्रियतमपितृपदसेवाम् सत्वावनं तथा वै ।
उपस्थितोऽयं सन्धिरुत्तमः । न च तं त्यक्तुं युक्तम् ॥ १ ॥

यदपि मरणशीलोऽयं मनुजः । आत्मा ध्रुवं त्वमर्त्यः ।
मर्त्यशरीरार्थे किं शोकः । अयि मातर्वद तन्माम् ॥ २ ॥

मातः तव हृदयस्थे प्रेमपारावारे अहं पूर्ववत् विहरिष्यामि । महात्मनि! मां सत्वरं नीत्वा अतिथिभोजनं सिद्धं कुरु । त्वयं-

ताम् । पूज्यतात, वन्दे । अस्मिन् जगति अशरीरोऽपि अहम् भवद् हृदये सततं निवसिष्यामि । पूज्य यतीश्वर विलम्बं क्षमस्व । अचिरेण एव मया भवतः अन्तः सायुज्यं लब्ध्वा भवतः करुणा-सागरे हृदये चिरवासः प्राप्स्यते । एषः अस्मिन् जीवने मे अन्त्यः प्रणामः । मातः एहि गच्छावः ।

( राजा, राज्ञी, चिलया च निर्गच्छन्ति । )

**यतिः**—(एकान्ते) धन्योऽसि कुमार ! धन्योऽसि ! रक्षितं खलु स्वपित्रोः सत्त्वं त्वया ।

## तृतीयः प्रवेशः

**राजा**—पूज्य यतीश्वर, अनुगृह्यताम् । गृह्यतां च एतद् अस्मद्हृदय–खण्डानां भोजनम् । आर्ये, स्थाप्यतां भोजनपात्रम् अतिथेः पुरतः ।

**राज्ञी**—इदं समानीतं भोजनपात्रम् । (भोजनपात्रं स्थापयति । )

**यतिः**—(इतस्ततः अवलोक्य आघ्राय च) अलीकः व्यव-हारः दृश्यते अत्र । महती खलु वञ्चना इयम् ! मा एवम् मा वञ्चयतां भवन्तौ । नाहं गृह्णामि एतत् । एषः अहं गच्छामि (उत्थाय चलितः । )

**राजा**—(पादयोः पतित्वा) क्षम्यतां पूज्य यतीश्वर, क्षम्यताम् । क्षणं तिष्ठतु भवान् । न कापि वंचना कृता आवा-भ्याम् । पुत्रं हित्वा अपि आवाम् भवत्सन्तोषं कर्तुम् असमर्थौ स्वः । दौर्भाग्यं खलु इदम् । कः अपराधः कृतः मया अथवा

अनया मे भार्यया येन एवंविधः कोपः क्रियते ? अपि नास्ति एतत् मे प्रियपुत्रस्य शरीरमांसम् ?

यतिः——अस्ति खलु तावत् । तथापि वञ्चितोऽहम् । अवगता भवत्सत्त्वशीलता; प्राप्तं मया इच्छाभोजनम् !

राज्ञी——सत्यं वदामि । मत्पुत्रस्य मांसम् इदम् ।

यतिः——अलम् अलं वञ्चनेन असत्यप्रलपनेन च । नाहं सुलभवञ्चनीयः एवम् । सम्यग् जानामि अहं यत् त्वया पुत्रशिरः कुत्रापि गृहे निक्षिप्तम् । सर्वेषु अङ्गेषु शिरः प्रधानम् । तदेव त्वया प्रच्छादितम् ।

राजा——आर्ये किमेतत् सत्यम् ? यदि मोहवशात् एवं त्वया कृतं तर्हि क्षमां याचस्व ।

राज्ञी——क्षम्यतां मे अपराधः । मोहवशात् मया शिरः प्रच्छन्नम् अधुनैव आनयामि तत् । ( गत्वा शिरः आनयति । ) एतत् शिरः समानीतम् ।

यतिः——अत्र एव मत्पुरः उलूखले शिरः स्थापयित्वा तस्य कण्डनं क्रियताम् ।

राज्ञी——तथा–(पुत्रमुखं चुम्बित्वा) वत्स क्षमस्व ते निष्ठुरामपि निर्बलां जननीम् । विवशा हि खलु सा । (उलूखले शिरः स्थापयति । )

यतिः——कण्डनसमये क्रन्दनं न क्रियताम् । यदि अतः परम् एकोऽपि अश्रुबिन्दुः तव नेत्रे दृश्यते तर्हि अहम् इतः गमिष्यामि । मा एवं मूकवत् तिष्ठ । कण्डनसमये मधुरं गायनं कुरु ।

राज्ञी—(गायनं करोति)

प्रियनन्दन हे गच्छ सुखं शिवभुवनम् ।
भूषयितुं हि खलु कैलासम् ।। ध्रु. ।।
त्वामाह्वयते वत्सलगिरिजा माता ।
आयातो गिरि-जामाता ।
संस्थाय सुखं भिक्षूदरशिविकायाम् ।
प्रवस त्वं पुरहरभवनम् ।
पितृसत्त्वकथामश्रुतपूर्वां विमलाम् ।
कथयितुं गच्छ शिवभवनम् ।
वत्सैष महानुत्सर्गो दिव्योऽयम् ।
रे पश्यतु सकलं विश्वम् ।
रे आनृण्यं त्वत्सेवितदुग्धस्य ।
अद्य वै त्वया सम्प्राप्तम् ।
यश इदं वत्स तव दिव्यम् ।
सर्वत्र भवेऽस्मिन् विततम् ।
पावितं त्वयैतद् भुवनम् ।
खलु नीतं रे त्वया धन्यतां स्वकुलम् ।
निजजननं जननी-जठरम् ।। १ ।।

(गायनानन्तरं भोजनपात्रम् अतिथेः पुरतः स्थापयति ।)

यतिः—नाहम् एकाकी एव भोजनं करोमि । युवाभ्यामपि मया सह एतद् भोज्यं सेवनीयम् ।

राजा—हा दैव ! कथम् अहम् स्वपुत्रस्य मांसं भक्षयितुं प्रभवामि ?

राज्ञी—नान्या गतिः । अन्यथा सत्त्वभङ्गो भवेत् । मया नवमासावधि एषः स्वोदरे धृतः । घटिकावधि स्वोदरे स्थापयितुं भवतः न अशक्यम् ।

**राजा**--नान्यः उपायः । आवां भवदाज्ञां पालयावः । भोजनं क्रियताम् ।

**यतिः**--परम् अभोज्यं पापमयं खलु निष्पुत्राणाम् अन्नम् । नाहं दोषभागी भवितुम् इच्छामि । भवतोः मुखावलोकनम् अपि दोषास्पदम् ।

**राज्ञी**--महात्मन्--आवयोः एकः एव पुत्रः आसीत् । स हि भवच्चरणयोः अर्पितः ।

**यतिः**--स्वपुत्रम् आह्वय । तेन आगन्तव्यमेव । तं विना अहं भोजनं न करोमि ।

**राज्ञी**--यथाज्ञापयति भवान्--(आह्वयति)

एहि एहि चिलया धावन् एहि सत्वरम् ।<br>
आह्वयति च जननी ते त्वामत्र सोत्सुकन् ।<br>
त्वां विना यतीन्द्रो नायम्<br>
वांछतीह सेवितुमन्नम्<br>
प्रतीक्षते च स त्वां नूनम्<br>
एहि सत्वरम् ॥ १ ॥

रक्षितुं च पित्रोः सत्त्वम्<br>
यतिवरं तर्पितुं पूज्यम्<br>
तोषयितुं जननीचित्तम्<br>
एहि सत्वरम् ॥ २ ॥

(गीतान्ते चिलया धावन् तत्र आयाति-मात्रा समाश्लिष्यते । अनन्तरं सः यतिसमीपं गत्वा तम् अभिवादयति)

**चिलया**--मातः ! तात !-अहं कैलासे मातुः गिरिजायाः अङ्के उपविष्टः चासम् । तया सह संलापसुखम् अनुभवन् । सानन्दं कालं नयन् आसम् । जगन्मातुः दृष्टिसुधया मार्जितः

अहम् आनन्दस्य परां कोटिं प्राप्तवान् । एतस्मिन् एव क्षणे, मातः तव शब्दः मत्कर्णे पतितः । श्रुत्वैव अहं धावन् एव अत्र आगतः । यतिश्रेष्ठ, अनुगृहीतः अयं जनः भवता, यत् जगन्मातुः दर्शनसुखं मया अनुभूतम् । अभिवादयामि अहं भवन्तम् ।

शंकरः–(प्रकटीभूय तं समाश्लिष्य) वत्स चिरंजीव । यावच्चन्द्रदिवाकरौ तव कीर्तिः स्थिरा भविष्यति । राजन् राज्ञि, सन्तुष्टोऽहं भवतोः सत्त्वोत्कर्षेण आतिथ्यशीलतया च । भवद्भ्यां मे लोकं सपदि आगन्तव्यम् । चिलया च दीर्घायुः भूत्वा धर्मेण प्रजाः पालयिष्यति । अतः परं किमन्यत् भवतोः ईप्सितं मया पूर्येत ?

राजा—विश्वमूर्तेः पावनं दर्शनं सञ्जातम् । अतः परं किम् अन्यत् वांछितव्यम्, तथापि लोककल्याणार्थम् एवं याच्यते ।

## भरतवाक्यम्

गौरीगिरिशौ करुणां कुरुताम् ।। ध्रु. ।।

भक्तमानसे प्रसन्नवदनौ । वांछितवरदौ सदा निवसताम् ।
निजजनहृदये निजपदसुरतिम् । परमकृपालू दृढां जनयताम् ।
विश्वबन्धुता विमलभावना । सकलमनःसु सदा विहरताम् ।
ईर्षाद्वेषौ दूरीभवताम् । प्रीतिभावना प्रभो जायताम् ।
स्वार्थाहंकृत्यादि–दुर्गुणावलिरवनीतलतो विलीयताम् ।।

शंकरः—तथास्तु ।

———

# वयं पञ्चाधिकं शतम् ।

वनपर्वान्तर्गतघोषयात्राकथायां किञ्चित् परिवर्तनं कृत्वा एषा नाटिका लिखिता ।

## नान्दी

वन्दे कृष्णं श्रीधरम् ।

सुरनरमुनिजननुतपदयुगलम् । मेघश्यामलम् ।।
हर्तुं भूमेः खलजनभारम् । त्रातुं धार्मिकजनसंभारम्
नारायणमवतीर्णं सनरम् । दीनोद्धारकम् ।।१।।
गोपैर्गोपीभिः क्रीडन्तम् अघकंसादीन् विमर्दयन्तम्
शतमखगर्वं विपरिहरन्तम् । कालियमर्दनम् ।।२।।
शत्रुं संधिं समुपदिशन्तम् । समरे पार्थरथं प्रवहन्तम्
विषमे पण्डुसुतान् रक्षन्तम् । जिष्णोः प्रियसखम् ।।३।।
कर्मयोगशास्त्रं कथयन्तम् । जनान् स्वधर्मे प्रवर्तयन्तम्
स्वात्मोन्नतिपथि जनान् नयन्तम् । योगस्येश्वरम् ।।४।।

दुर्योधनः—वनवासिनां पांडवानां दशवर्षाणि व्यतीतानि । परं तत्सम्बंधिनी मन्मनोव्यग्रता मनागपि न्यूना न भवति । राज्यभ्रष्टाणामपि तेषां यशः सितपक्षशशिकलेव वर्धते एव । प्रजानां हृदययेषु तेषां स्थानं पूर्ववदेव अचलं विद्यते । तेषां नाशाय कृताः अस्मत्प्रयत्नाः व्यर्थतां गताः । अग्नितप्तं काञ्चनमिव विपद्ग्रस्ता अपि ते पूर्वाधिकतर तेजस्विनः शोभन्ते । पाण्डवेषु जीवत्सु अहं सुखनिद्रां न लप्स्ये ।

कर्णः---मयि जीवति त्वया एतादृशी चिन्ता न कार्या। पाण्डवाः ते किमपि अप्रियं कर्तुं न शक्ष्यन्ति।

दुर्यो०---तव एव बलेन पाण्डवैः सह वैरं कर्तुं सन्नद्धोऽस्मि। परं केनापि अवर्णनीयेन भयेन मे मनः शिशिरहतम् नलिनम् इव कम्पते। वनवासखेदात् कृशशरीराः अपि पाण्डवाः स्वात्मतेजसा मां दहन्तः इव दृश्यन्ते। तेषां विनाशः एव मे मनःशान्ति प्रदास्यति।

शकुनिः---अप्यस्ति काचित् नूतनतमा वार्ता तेषां विषये।

दुर्यो०---(विलोक्य)--एष इतः एव आयाति तद्वार्ताम् आनेतुं प्रेषितः मे चारः।

चारः---(प्रविश्य)--जयतु देवः। द्वैतवनात् प्रतिनिवृत्तोऽहं भवत्पादमूलमागतोऽस्मि।

दुर्यो०---त्वरय-कथय का वार्ता विद्यते।

चारः---वने पाण्डवाः कुशलिनः सन्ति।

दुर्यो०---अस्माभिः तेषां कुशलवार्ता न पृष्टा। अन्यत् किमपि कथनीयं चेत् कथय।

चारः---शृणोतु देवः। भगवतः व्यासमहर्षेः उपदेशात् पार्थः भगवन्तम् आशुतोषं तपसा तोषयितुं तस्मात् च दिव्यास्त्रं प्राप्तुम् अचिरेण एव गिरिराजप्रदेशं गमिष्यति।

दुर्यो०---अपि एवम्, हुम्। गच्छ बहिः तिष्ठ। मातुल, अपि श्रुता दूतकथिता वार्ता?

शकुनिः---श्रुता। चिन्ताप्रदा हि सा अस्माकं कृते। ईश्वरानुग्रहात् यदि पार्थः अजय्यः भविष्यति तर्हि तत् कौरवाणाम् अनिष्टकरं भवेत्।

**दुर्यो०**––तस्य च बलेन सन्नद्धाः पाण्डवाः स्वराज्यं प्राप्तुम् अवश्यं यतिष्यन्ते । युद्धेन विना मया तेभ्यः सूच्यग्रमितापि भूमिः न दीयते इति मत्कृता प्रतिज्ञा कथं पूर्णतां यास्यति इत्येव मे चिन्ता ।

**कर्णः**––अहं तव सहायः अस्मि । मा अस्तु ते किमपि भयम् । वयं रणे पाण्डवान् अवश्यं जेष्यामः ।

**शकुनिः**––लघुः आपद्ग्रस्तः च इति मत्वा अरिः कदापि उपेक्षणीयः न भवति । युद्धस्य फलं वक्तुं न शक्यते । यथा जयः तथा पराजयः अपि संभवनीयः भवति । अपरं च भीष्मद्रोणादयः युद्धविशारदाः अस्मत्पक्षे सन्तः अपि मनसा ते पाण्डवपक्षपातिनः सन्ति इति भवन्तः जानन्ति एव । अतः यावत् शक्यं युद्धं परिहर्तव्यं बुद्धिमद्भिः ।

**दुर्यो०**––तर्हि किं कर्तव्यम् । युद्धेन विना कः अन्यः मार्गः।

**शकुनिः** –केनापि कपटप्रबन्धेन शत्रुनाशः सम्पादयितव्यः।

**दुर्यो०**––कथ्यताम्-किं कर्तव्यम् ।

**शकुनिः**––साम्प्रतम् पाण्डवपक्षपाती पुरुषोत्तमः दूरं द्वारकायाम् अस्ति । तर्हि वयं द्वैतवनं गत्वा रात्रौ निद्रामग्नान् पाण्डवान् अभिद्रवामः। यदि शक्यं तान् हनिष्यामः। अन्यथा, स्ववैभवप्रदर्शनेन तेषां लज्जानुभवं कारयित्वा आत्मदीनदशायाः चिन्तनेन मरणाधिकं दुःखम् अनुभवतः तान् विलोक्य गजपुरं प्रत्यागमिष्यामः।

**दुर्यो०** – अपि न स्मर्यते भवता यत् लाक्षागृहे पांडवान् दग्धुम् अतिगुप्ततया कृताम् अस्मन्मन्त्रणां तैः कथमपि ज्ञात्वा न केवलम् आत्मरक्षणं कृतम् अपि तु तेषां घाताय नियुक्तः अस्माकं विश्वसनीयः अनुचरः पुरोचनः स्वयं प्राणैः वियुक्तः ।

पाण्डवाः सदैव सावधानाः सन्ति। तेषां गुप्तचराः सर्वत्र विचरन्ति। अस्माकं हेतुं कथमपि विज्ञाय ते तं पाण्डवेभ्यः कथयिष्यन्ति।

शकुनिः---अत्र वयं चत्वारः एव स्मः। अस्माकं निर्णयः बहिः कुत्रापि प्राकाश्यं न यास्यति।

दुर्यो०---परम् अस्माकं प्रस्थानं कथं गोपनीयम्?

शकुनिः---वयं घोषयात्रां निमित्तीकृत्य द्वैतवनं गमिष्यामः। यात्रार्थं प्रस्थितानां नः आन्तरं हेतुं कः कथं ज्ञास्यति।

दुर्यो०---विदुरात् मे महती शंका विद्यते। सः हि पांडवानां महान् हितेच्छुः। अस्माकं गूढतमापि मंत्रणा तस्य अविदिता नास्ति इति मे मतिः। पाण्डवानां रक्षणे सः सदैव सावधानः अस्ति। पुत्राणां हितं चिकीर्षन्तः अपि मे तातचरणाः नित्यं करणीये कार्ये विदुरस्य उपदेशम् गृह्णन्ति। तर्हि पितृपादानां अनुज्ञा अस्माभिः कथं प्राप्तव्या इति मे महती शंका।

शकुनिः---तत् अहं सद्यः एव संपादयामि। श्वः प्रभाते अस्माभिः प्रस्थानम् कर्तव्यम्। अद्य रात्रौ वयं पुनरत्र एव मिलित्वा करिष्यमाणे कार्ये पुनर्विमर्शनं कुर्मः।

दुर्योधनः---यत् भवान् अनुमन्यते--(विलोक्य)-अहो एषा चेटी भीतभीता इव इतोमुखा आयाति।

चेटी--(प्रविश्य) विजयताम् देवः। त्वरया आगम्यतां देवीमन्दिरम्।

दुर्यो:--किम् एवं सम्भ्राता इव दृश्यसे। अपि कुशलं वर्तते देव्याः।

चेटी:---अव्यापन्ना हि सा। किन्तु केनापि अनधिगत-शोकेन व्याप्ता विस्रस्तकुंतला रुदती देवी शयनास्तरणे विलुठन्ती

तिष्ठति । अस्माभिः वहुधा सान्त्व्यमानापि तत्रभवती रोदनात् न विरमति ।

**दुर्योधनः**—अपि एवम् । अयम् अहं तत्रैव सपदि गच्छामि, अग्रे भव ।

**चेटी**—इत इतो महाराजः (निर्गच्छति).

## द्वितीयः प्रवेशः

**भानुमती**—(उष्णं निःश्वस्य)

मन आतंकाकुलितम् । ममेदम् जाने न हि किं जातम् ।।
अहो सुदारुण एष स्वप्नः । विधिघटितं ह्यज्ञेयम् ।।
भगवन् शरणापन्ना तेऽहम् । श्रुणु मे दीनं वचनम् ।।
रक्ष रक्ष करुणाकर कृपया । बालायाः सौभाग्यम् ।।

(रुदती शयने निपतति)

**दुर्योधनः**—(प्रविश्य)—प्रिये भानुमति, किम् एतत् ? किमर्थम् अयं शोकः ? प्रोत्फुल्लकमलश्रीकं ते मनोहारि मुखमण्डलं किमर्थं म्लानं सञ्जातम् ? चिरं विमृश्यापि तव खिन्नतायाः कारणं न ज्ञायते ।

नीरोद्धृताम्बुजमिव प्रभया विहीनम्
संदृश्यते मुखमिदं सुमुखि त्वदीयम् ।
उष्णं मुहुर्मुहुरिदं श्वसितं च सास्रम्
चेतो ममेदमधुना विकलीकरोति ।

प्रिये समाश्वसिहि, धृतिं धारय । कथ्यतां ते शोककारणम् । अकाण्डे एव चक्रवर्तिनः दुर्योधनस्य महिषी केन महता भयेन एवम् आक्रान्ता ? तत् अहं श्रवणोत्सुकोऽस्मि।

**भानुमती**—अद्य मया भयंकरः स्वप्नः दृष्टः । स्वप्नाः भाविघटनानां सूचकाः भवन्ति इति श्रूयते ।

**दुर्योधनः**--(विहस्य) केवलं स्वप्नदर्शनेन एव तव ईदृशी अवस्था जाता। कौरवेश्वरस्य महाराज्ञ्याः एतावतीं भीतिं दृष्ट्वा महाजना विहसिष्यन्ति।

**भानुमती**--श्रूयतां मे स्वप्नः प्रथमम्। अनन्तरम् एव विहस्यताम्।

**दुर्योधनः**--कथयस्व।

**भानुमती**--श्रूयताम्--

आयान्ती साट्टहासं ह्यरुणितनयनाग्न्यर्चिषा मां दहन्ती
तीक्ष्णैर्दन्तैर्दशन्ती स्वमधरमथ मद्वेणिबंधं दलन्ती
भालस्थं कौंकुमाङ्कं निजकरयुगलेनोपयान्ती प्रमार्ष्टुम्
दृष्टा स्वप्ने भयंका प्रकुपितयुवती भीषणा राक्षसीव ।।

**दुर्योधनः**--अनन्तरम्।

**भानुमती**--अनन्तरम् सा करालवदना स्त्री मां बाहुभ्याम् उद्धृत्य प्रदीप्तानले प्रक्षिप्य अदृश्याभवत्। तस्मिन्नेव क्षणे भयरोमांचिततनुः अहम् उच्चैः कर्कशं क्रंदन्ती प्रबुद्धा। अद्यापि मे अङ्गानि सकम्पानि सन्ति।

**दुर्योधनः**--(आतमगतम्)--स्थाने खलु अस्या इयम् भय-व्याकुलता। श्रुत्वैव मे हृदयमपि विचिलितं सञ्जातम्।

**भानुमती**--अनयोः चरणयोः दासी दीना याचनां कर्तुम् इच्छति। श्रूयतां सा।

त्यजतु भवान् खलु वैरम्। अधुना। बंधुजनानामकुशलकरणम्।
परलक्ष्मीरियमशुभदायिनी। कुलघाताय हि तद्धरणम् ।।
परलक्ष्मीलोभाद्दशवदनः। सकुलो गतवान् खलु विलयम् ।।
समर्प्य बन्धुभ्यस्तद्राज्यम्। तत् सौहार्दं भजनीयम् ।।
पदलीनाया दास्या अधुना। प्रार्थनमेतच्छ्रवणीयम् ।।

(पादयोः पतति)

**दुर्योधनः**--(विहस्य) निसर्गभीरवः स्त्रियः इति यदुच्यते तत् सत्यं खलु । प्रिये, स्वप्नाः निरर्थकाः सन्ति । वीराः राज-कार्यज्ञाः स्वप्नेषु न विश्वसन्ति । कालः अपि मे विप्रियं कर्तुं न शक्नोति । का पुनः कथा पाण्डवानाम्? शृणु तावत्--

सम्पादिता ह्यसहजं बहुभिः प्रयत्नैः
दासीकृता तव मया सुभगे सपत्नी ।
भुक्ता सुरेन्द्र इव या रिपुराजलक्ष्मीः
युद्धं विना प्रतिददान्यरये कथं ताम् ।।

अतः त्यज्यताम् सकला चिन्ता । अस्तु । मया कार्यवशात् अधुनैव अन्यत्र गन्तव्यम् ।

**भानुमती**-ईश्वरो मे सौभाग्यं चिरं रक्षतु ।

**दुर्योधनः**--तथास्तु । ईश्वरोऽपि कदापि अन्यथा न चिन्तयेत् (निर्गच्छतः)

---

## तृतीयः प्रवेशः

**शकुनिः**--(प्रविश्य) महता कष्टेन तत्रभवतः धृतराष्ट्रमहा-राजस्य द्वैतवनं गन्तुम् अनुज्ञा सम्पादिता । धूर्तेन विदुरेण मन्मार्गे बाधा निर्मिता, परं मद्बुद्धिबलेन सा निराकृता । प्रथममेव मया समङ्गनामा गो-पालः सम्यक् पाठयित्वा महाराजस्य पुरतः उपस्थापितः । मन्निदेशानुसारतः तेन स्वभूमिका सम्यक् अभिनीता । तस्य वचनं विश्वस्य महाराजेन घोषावलोकनार्थं द्वैतवनं गन्तुं दुर्योधनः आज्ञप्तः । पांडवा वने असहायाः सन्ति । अधुना तेषां नाशः सुसाध्यः भवेत् इति अहं मन्ये । पांडवेषु विनष्टेषु एव

दुर्योधनः निष्कंटकं राज्यं कर्तुं समर्थः भविष्यति । भवतु । प्रातः एव अस्माभिः द्वैतवनाय प्रस्थातव्यम् । तर्हि प्रास्थानिकी व्यवस्था मया सपदि सम्पादयितव्या अन्यथा महाराजस्य मतपरिवर्तनं कदाचित् भवेत् । (निर्गच्छति)

---

## चतुर्थः प्रवेशः

( स्थलं--द्वैतवनम् )

( दुर्योधन–शकुनि–कर्ण–दुःशासनाः प्रविशन्ति )

**दुर्योधनः**--अहो घोरम् अरण्यम् एतत् । अनेन सान्द्रतमसा तत् अधिकतरं भयप्रदं संजातमिव दृश्यते । केनापि अकथनीयेन भयेन मे हृदयम् स्पंदते ।

हृदयं भयभीतम् । ममेदम् ।।ध्रु०।।

वनसत्वानां घोरगर्जनैः । भूतगणानां भयदतर्जनैः
ऋक्षवृकाणां घोरारावैः । निनादितं हि वनम् ।।१।।
फुत्कुर्वन्तो विषं भोगिनः । घूत्कुर्वन्तो दिनद्वेषिणः
तथा पिंगला आक्रोशन्तः । कम्पयन्ति पथिकम् ।।२।।
रात्रिकीटकाः कर्णकर्कशम् । कुर्वन्त्यविरतमप्रियनादम्
दृशं विफलयति तमः सुघोरम् । विचलति मे हृदयम् ।।३।।

**शकुनिः**—नैष समयः हृदयदौर्बल्यं प्रकटयितुम् । अत्रः अस्माभिः सावधानतया वर्तितव्यम् । इतः नातिदूरेपुण्यसलिला सरस्वती भवेत् इति सूचयति अयं शीतलः अनिलः । सरस्वत्याः अपरस्मिन् तीरे एव पांडवानां वन्यः आश्रमः विद्यते ।

**कर्णः**---मन्ये वयं प्राप्ता एव सरस्वतीम् । चंचल-गामिन्याः! तस्याः अयं घोषः स्फुटं श्रूयते । हंत जलक्रीडा-

र्थम् आगतानां केषाम् अपि हास्यध्वनिः अपि कर्णे पतति। वीणानिनादमधुरः स्त्रीजनसुलभः स्वरः अपि कर्णगोचरी भवति। न जाने अस्मिन् समये कैः भवितव्यम् अत्र।

**दुर्योधनः**–दुःशासन, सत्वरं गत्वा के अत्र सन्ति इति सम्यग् ज्ञायताम्। यदि शक्यम्, तत्रस्थान् जनान् अस्मन्मार्गाद् दूरे गन्तुं कथयित्वा सत्वरं प्रत्यागच्छ।

**दुःशासनः**–तथा (निष्क्रान्तः)

**दुर्योधनः**–एतादृशे हिंस्रश्वापदसंकुले घोरे कानने पांडवाः सुखेन शान्त्या च कालं कथं नयन्ति इति न ज्ञायते। अतीव विस्मयप्रदं खलु एतद्।

**कर्णः**–बाल्याद् एव ते सम्यक् परिचिताः वनवास-कष्टैः। एष हि तेषां द्वितीयो वनवासः। अहं तु मन्ये एतैः कष्टैः ते अधिकतरा धैर्यशालिनः बलशलिनः च संजाताः स्युः।

**शकुनिः**–यदि अधुनैव ते केनापि उपायेन न नाशिताः तर्हि पश्चात् ते दुर्धर्षाः अजयाश्च भविष्यन्ति। अहो, एष दुःशासनः भयसंत्रस्ताननः धावन्नेव आयाति।

**दुःशासनः**–(प्रविश्य) अहो घोरा बाधा अस्मन्मार्गे आपतिता।

**दुर्योधनः**–बाधा–कथं विधा बाधा–स्पष्टं ब्रूहि।

**दुःशासनः**–गंधर्वराजः चित्रसेनः सपरिवारः सरस्वत्यां क्रीडितुं समायातः। मार्गात् दूरे गन्तुं मया स कथितः। परं शरप्रक्षेपणेन एव तेन उत्तरम् प्रदत्तम्। युद्धेन विना नद्याः पारं गन्तुं वयं न शक्नुमः।

**कर्णः**–अहो धृष्टता गंधर्वराजस्य। कौरवेश्वरस्य

तत्कृतः अयम् अधिक्षेपः अक्षम्यः। शासनं हि अर्हति सः।

शकुनिः—अतर्कितं व्यसनम् आपतितम्।

दुर्योधनः–विलम्बः घातकरः। गन्धर्वं शासनं कर्तुम् अस्माभिः सपदि गन्तव्यम्। अन्यथा अस्माकं हेतुः निष्फलो भविष्यति।

कर्णः—एते खलु गानकुशलाः विलासिनश्च गंधर्वाः। कथं ते अस्माभिः योद्धुं प्रभवन्ति।

नच योध्दुं शक्ताः स्वर्गाधिका इमे।
परिचिता न शस्त्रास्त्रैः समरदुर्गमे ॥धृ.॥

सदा सुरेन्द्रस्य सदसि
मोदयन्ति सुरमनांसि
गीतवाद्यनृत्यदत्तमानसा इमे ॥१॥

संमुखे न शस्त्रभृताम्
क्षणमपि न स्थातुमलम्
नच भीतिस्तेभ्यो नो मतमिदं हि मे ॥२॥

तर्हि न विद्यते लवमपि भीतिकारणम् अत्र।

दुर्योधनः—तेन हि त्वरामः तत्र गन्तुम्। (निर्गच्छन्ति)

———

## पञ्चमः प्रवेशः

(द्वैतवने पांडवानाम् आश्रमः युधिष्ठिरः, भीमः, द्रौपदी च प्रविशन्ति)

भीमः – आर्य, अनेन अतिकष्टप्रदेन अरण्यवासेन आर्यस्य मनः कथं न दूयते। वयं पञ्च भ्रातरः पुरुषाः। वनवासदुःखानि सोढुम् समर्थाः परं, पश्यतु भवान् एतां कुसुमकोमलतनुं कृष्णाम्। जन्मनः श्यामा सा अधुना

वनवासखेदात् अधिकतरा श्यामा संजाता। कथम् एनां तेजोहीनां संक्लेशखिन्नां द्रष्टुं भवान् पारयति।

युधिष्ठिरः—वत्स भीम, जानामि सम्यक् देव्याः कृष्णायाः दीनां दशाम् । तां दृष्ट्वा मे हृदयम् अतीव दूयते । परं कः उपायः । अस्मत्पणानुसारतः, अस्माभिः त्रयोदश-वर्षाणि वनवासाज्ञातवासदुःखानि नियतम् अनुभवितव्यानि ।

भीमः– आर्य, क्षाम्यतु भवान् । परम् एतादृशानि क्षत्रिय-कुलविशोभीनि वाक्यानि कथं भवन्मुखात् निःसरन्ति इति ज्ञातुम् अहं न पारयामि । अरिकृतायाः अस्माकम् अपमान-परम्परायाः स्मरणेन भवतः शोणितं कथं न क्षुभ्यति । दश-सहस्रनागबलिनः गांधारराजस्य तनुं द्विधाभग्नां कुर्वाणौ इमौ मे दौर्दण्डौ अरिकृतावमानस्य प्रतिशोधाय अतीव प्रस्फुरतः । द्रौपद्याः अलकाकर्षणं कर्तुः अधमाधमस्य दुःशासनस्य कंठं विदार्य तत्स्थाननिसृतैः उष्णरुधिरैरवलिप्तेन मे करद्वयेन तस्याः वेणी-बंधनं कर्तुं मे मनः अतीव उत्कंठितम् अस्ति । द्रौपदी–स्वयंवर–प्रसंगे प्रथमं मत्स्यभेदं पश्चात् अभिद्रवतां नृपाणां पराभवं कर्तुः पार्थस्य इदं धनुः अपि अरिकंठलक्ष्ये पतितुम् अतीव आतुरम् अस्ति । बकादीन् राक्षसान् सलीलं मृत्योः मुखे पातयन्ती मे अयुतनागशक्तिः, अद्वितीयधनुर्धरस्य पार्थस्य अमोघा धनुर्धारिता, नकुलहदेवयोः रणनैपुण्यं सर्वम् एतत् भवतः साहाय्ये विद्यते । तर्हि किम् अनया भीरुत्वदर्शिन्या शान्त्या ?

युधिष्ठिरः –सत्यं सर्वं यत् त्वं भाषसे । परं नायं समयः प्रतीकारस्य । अधुना अस्माभिः शान्तिः एव धार्या ।

भीमः – आर्य, अरिकृतः अस्मदवमानः भवता विस्मृतः इव दृश्यते । तेन हि एतादृशी शान्तिः भवता धार्यते ।

शान्तिः मुनीनां भूषणं न तु राज्ञाम् । अरिः अस्मान् अनवरतम् अपकरोति । अस्मच्छलनात् स किंचिदपि न विरमति । अस्माकम् अप्रतिकारः एव तस्मै अस्मान् पीडयितुं साहसं ददाति । अतः अहं ब्रवीमि, न युज्यते इयं शान्तिः । इदानीम् एव गजपुरं गत्वा समित्रं तं दुर्योधनम् उचितशासनभाजं कृत्वा अस्मद्दायं प्रत्याहरिष्यामः ।

युधिष्ठिरः---नैतदुचितम् । तेन पाण्डवानाम् अकीर्तिः जगति प्रसरिष्यति । नीतिविरुद्धम् अस्माभिः किमपि न कर्तव्यम् ।

द्रौपदी---इयम् एकपक्षीया नीतिः अस्माकम् अहितकरी भवति । तत्कृतः अपकारः अस्माभिः अप्रतिकारं सह्यते । अतः एव अस्मान् धर्षयितुं तेन उत्तरोत्तरम् अतीव धृष्टता क्रियते । अरिकृतः एषः अस्मद्-बलाधिक्षेपः कदापि न क्षन्तव्यः ।

भीमः---अहो एषः दैवदुर्विलासः ! अखिलं विश्वं जेतुं समर्थम् एतत् पार्थधनुः, रिपुरुधिरतृषाकुला इयं मे गदा, नकुल-सहदेवयोः रणनैपुण्यम् एतत् सर्वम् अनुपयोगित्वात् व्यर्थतां नीयते ।

द्रौपदी---वनवासाय प्रस्थितानां पाण्डवानां प्रतिज्ञाः पूर्णतां प्राप्स्यन्ति इति न दृश्यते । बलवताम् अपि भवताम् एष महान् परिभवः भवतः लोकहास्यस्य पात्रं करिष्यति ।

जन एवं सर्वो वदति न किम् ? ॥ध्रु०॥
अतुलवीर्यवन्तोऽपि पांडवाः । धी-श्रीमन्तोऽप्युदारभावाः
सखा हि येषां स वासुदेवः । दीनदशा तैर्व्रियते किम् ॥१॥
सदा कालमपि येऽलं जेतुम् । योग्या राज्यश्रियमुपभोक्तुम्
मुनिवृत्त्या निजकालं नेतुम् । स्वमानहीना अभवन् किम् ॥२॥

भीमः---देवि, मत्कृता प्रतिज्ञा कदापि असत्या न भविष्यति ।

कंचित्कालं प्रतीक्षस्व । देवि शृणु इमाम्---

विहत्य शतकौरवान् सपदि संगरे सानुगान्
विदीर्णरिपुशोणितैः स्नपयितुं स्वदिव्यां तनुम् ।
विपक्षतनुखंडकैः शमयितुं वृकाणां क्षुधाम्
इयं खलु समुत्सुका स्फुरति मत्करस्था गदा ।।

अपरं च--.

दुःशासनं हि समरे विनिहत्य शीघ्रम्
तद्दीर्णकंठरुधिरैरवलिप्तहस्तः ।
कर्ताऽस्मि बंधनयुतामलकावलिं ते
आर्ये ! भविष्यति न मे वचनं हि मोघम् ।।

युधिष्ठिरः---त्वम् अतुलबलशाली वीरः इति सत्यम् । स्वप्रतिज्ञा त्वं पालयिष्यसि एतदपि सत्यम् । परम् अविचारतः अस्माभिः किमपि न कर्तव्यम् । वचनभंगः अधर्मः भवति । स हि अस्मद् हिताय कदापि न भवेत् । यतो धर्मस्ततत एव जयः । वीरेषु दुर्योधनसहायेषु भीष्मद्रोणप्रमुखेषु अनन्यसाधारणेषु सत्सु अस्माकं जयप्राप्तिः असंभवनीया अस्ति । अतः अस्माभिः अधर्मः कदापि न कार्यः । कौरवाः स्वेन अधर्मेण एव नाशं यास्यन्ति । अधुना वनवासस्य अल्पकालः अवशिष्टः । स हि अस्माभिः शक्ति संचये व्ययितव्यः । प्रियः अर्जुनः आशुतोषं शंकरं स्वतपसा तोषयित्वा तस्मात् च दिव्यास्त्रप्राप्ति कर्तुं श्वः इतः प्रस्थानम् करिष्यति । तर्हि कंचित्कालं शान्तिः पालनीया ।

चारः---(प्रविश्य) जयतु देवः ।

युधिष्ठिरः---अपि विद्यते काचित् विशेषा वार्ता ?

चारः---अथ किम् । भवतः असहायान् असावधानान् च हन्तुं विनिश्चित्य सकर्णशकुनिदुःशासनः दुर्योधनः द्वैतवनं प्रविष्टः ।

**भीमः**–हुम्–अपि एवम्–विषधरः विषमेव वमति । कथय अधुना क्व संति ते । सपदि गत्वा तान् दण्डयामि ।

**चारः**---तद् हि अनावश्यकं खलु । परार्थं निर्मितायां गर्तायां ते पापाचारिणः स्वयमेव पतिताः । अतः परं तेभ्यः लवमपि भयं न विद्यते ।

**युधिष्ठिर**---अहो विचित्रेयं वार्ता । अपि ते कस्मिन्नपि संकटे पतिताः ।

**चारः**---गंधर्वराजेन ते युद्धे पराजिताः बंदीकृताश्च । तेन तान्गंधर्वलोकं नीयमानान् अवलोक्य अहम् भवत्पादमूलम् आगतोऽस्मि ।

**भीमः**---सुष्ठु जातम् । स्वेनैव दुष्कर्मणा ते एतां गतिम् प्राप्ताः । अनायासे एव अस्मदरिः अन्तकालयम् आपन्नः अस्ति ।

**युधिष्ठिरः**---नैनद् उचितम् । अस्माभिः समित्रः सुयोधनः गंधर्वबंधनात् मोचयितव्यः ।

**भीमः**—-अहो लोकविलक्षणा अश्रुतपूर्वा विचित्रा च एषा दया यया दंशोन्मुखः अपि सर्पः अमृतदानेन परिपोष्यते । आर्यं, विरम्यताम् अस्मात् आत्मघातात् । शत्रुः आत्मदोषेण म्रियते, तर्हि एषा दया अस्थाने एव । अस्माभिः औदासीन्यम् एव अवलंबितव्यम् अत्र ।

**युधिष्ठिरः**–नैवं, नैवंम् उचितम् । कौरवाः अस्मद्बांधवाः । अन्यस्मात् तेषां पराभवे जाते कुलकीर्तिः नाशं यास्यति । एतद् अस्माभिः सम्यग् विचिन्तनीयम् । अस्मत्कुलकीर्तिः अपि रक्षणीया । कौरवपांडवयोः वैरं कौटुम्बिकम् । तस्मिन् वयं पंच ते च शतं सन्ति । परं, परैः सह विग्रहे प्राप्ते वयं पञ्चाधिकं

शतं स्मः इति न विस्मर्तव्यम् । तर्हि अस्माभिः अलसैः उदासीनैः वा न भाव्यम् । वत्स भीम, वत्स अर्जुन, युवाम् उभौ अपि तूर्णं गत्वा गंधर्वं शासित्वा सुयोधनादीन् च मोचयित्वा तान् अत्र आनयतं । विलम्बो मा भवतु ।

**भीमः**—यथा आज्ञापयति भवान् । (निष्क्रान्ताः)

---

## षष्ठ प्रवेशः

(युधिष्ठिर–भीम–दुर्योधनादयः प्रविशन्ति)

**युधिष्ठिरः**—प्रिय सुयोधन, अनीतेः दुष्परिणामः भवता दृष्टः । नीतिविरुद्धेन व्यवहारेण न कस्यापि हितं भवति । वयम् असहायाः अतः व्यापादयितुं सुलभाः इति मत्वा भवता अस्मन्नाशार्थं एतद् दुःसाहसं कृतम् । अस्माकं धर्मः एव अस्मान् सर्वत्र सर्वतः च परिरक्षति । बुद्धिमतः अपि भवतः हृदये एवंविधः अधार्मिकः अविचारः कथं प्रविष्टः इति न ज्ञायते । कुमंत्रः सर्वथा त्याज्यः । भवतु । यद् भूतम् तन् न शोच्यम् । अतः परम् एवंविधः कुलकीर्तिनाशकः अविचारः कदापि न कर्तव्यः । हस्तिनापुरस्य सिंहासनस्थेन स्वहृदयं एतावतीं लघुतां न नेयम् । अस्माकं पूर्वजाः आदर्शनृपतयः बभूवुः । तेषां जगत्पावनी अमला कीर्तिः अस्मद् असद्व्यवहारेण कदापि न दूषयितव्या।

**दुर्योधनः**—(आत्मगतम्) अप्रियोऽपि एष उपदेशः श्रवणीयः एव । का अन्या गतिः । दैवेन खलु वंचिताः स्मः । कुसमये अत्रागन्तुं मया प्रस्थानं कृतम् । अधुना पश्चात्तापेन किम् । अहो विचित्रेयं दैवगतिः । येषां नाशः अस्माभिः चिन्तितः तैः एव वयं रक्षिताः असह्यं खलु एतत् । अस्तु । प्राणाः कथमपि

रक्षिताः इति अहं वहु मन्ये । अतःपरं मया अधिकतरेण सावधानेन भवितव्यम् ।

**युधिष्ठिरः**—किं चिन्त्यते भवता । भूतार्थे विषादः न कार्यः । परेभ्यः भवतः पराजयः मम एव पराजयः इति अहं मन्ये । कुलकीर्तिरक्षणार्थम् एव मया भवन्मोचनाय भीमार्जुनौ प्रेषितौ । एवंविधस्य प्रसंगस्य पुनरावृत्तिः न भविष्यति इति अहम् आशासे ।

**दुर्योधनः**–(आत्मगतम्) पाण्डवानां नाशः एव मे जीवित-कर्तव्यम् । परं, साम्प्रतं मया नम्रता एव अवलंबितव्या । (प्रकटम्) भवत्पुरतः वयम् एवंविधाःपुनरपि न आगमिष्यामः । तर्हि अनुज्ञायतां गन्तुम् ।

**युधिष्ठिरः**—गन्तुं भवन्तः स्वतन्त्राः । परं भवन्तः निःशस्त्राः । तर्हि भीमार्जुनौ भवतः द्वैतवनात् बहिः प्रापयिष्यतः ।

**दुर्योधनः**—अनुगृहीताः स्मः । परं नैतद् आवश्यकम् । वयं सकुशलं गजपुरम् निवर्तिष्यामहे ।

**युधिष्ठिरः**—बाढम् । यथा भवान् मन्यते । शुभाः वः पन्थानः सन्तु । (दुर्योधनकर्णादयः निर्गच्छन्ति)

**द्रौपदी**:--(प्रविश्य)अपि गतः भवतः प्रियः सुयोधनः । अस्मत् सपर्यां गृहीतं सः किं न अत्र संस्थापितः ।

**अर्जुनः**—आर्यकृतोपदेशः एव तस्य सम्यक्सपर्या संजाता । तया एव संतृप्तमनाः स इतः निवृत्तः ।

**युधिष्ठिरः**—वत्स भीम, वत्स अर्जुन, देवि द्रौपदि, एतद् अस्मद् भ्रातृरक्षणस्य कर्म अस्माकम् आवश्यकं कर्तव्यम् आसीत् । तद् एव अस्माभिः कृतम् । परम् अस्मान् हन्तुं सबांधवः सः

अत्रागतः इति अयम् तेन महान् अधर्मः कृतः। विनाशकाले विपरीतबुद्धिः। मन्ये तस्य विनाशकालः समीपम् आयातः। अतः एव तस्य एवंविधा अधर्मबुद्धिः भवति। अस्मान् रक्षितुम् ईश्वरेण एव चित्रसेनः अत्र प्रेषितः। भगवतः श्रीकृष्णस्य वात्सल्यम् अस्मान् सर्वत्र रक्षति। अतः अस्माभिः सर्वैः सः शुद्धान्तःकरणेन एवम् प्रार्थनीयः।—

केशव करुणाकर कुरु करुणाम् ॥ध्रु॥

इष्टदैवतं परमं नस्त्वम्
आधारस्त्वं पण्डुसुतानाम् ॥१॥

पुत्रान् पितराविव खलु चास्मान्
सततं रक्षसि विषये दीनान् ॥२॥

न विस्मरामः कदापि भवतः
उपकृतिममलामतुलामेनाम् ॥३॥

नय विलयं भो द्वेषभावनाम्
सृज मुकुंद चिरबन्धुभावनाम् ॥४॥

धीकीर्तिश्रीबलतेजोभिः
अलंकृता कुरु भारतवसुधाम् ॥५॥

## समाप्तम्

# शुद्धिपत्रम्

| पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| १ | ४ | मङ्गलमतिमादमयम् | मङ्गलमतिमोदमयम् |
| ५ | २ | अथ वा | अथवा |
| ६ | ११ | स्मर्तृणाम् | स्मर्तॄणाम् |
| १० | २ | नाद्यपि | नाद्यापि |
| ११ | ७ | आश्रमोऽआवां | अश्रमः । आवां |
| ११ | ११ | क्षणमात्र | क्षणमात्रम् |
| १४ | ५ | विचारमूढ | विचारमूढः |
| १५ | ८ | च्युत | च्युतं |
| १८ | २ | समया | स मया |
| १९ | २३ | इमो | इमौ |
| २२ | ४ | अजयाः | अजय्याः |
| २३ | ५ | तेषाम् अद्य | तेषाम् । अद्य |
| २४ | १७ | सत्यप्रियः | सत्यप्रियाः |
| २४ | ६ | सम्वधिनः | सम्वन्धिनः |
| २४ | २० | मोचिताः । कथमलं | मोचिताः कथमलं |
| २४ | २१-२२ | कस्मादापि | कस्मादपि |
| २५ | १ | ि क | किं |
| २५ | ४ | विहसता | विहसतां |
| २५ | १७ | प्र यागताः | प्रत्यागताः |
| २९ | १९ | भविष्यमि | भविष्यामि |
| ३१ | ४ | अत्रैव | अद्यैव |
| ३१ | १३ | प्रषणीयो | प्रेषणीयो |
| ३८ | ६ | अपगधी | अपराधी |
| | १५ | द्रष्टुम | द्रष्टुम् |
| | १६ | अभ्यर्थते | अभ्यर्थये |
| ४३ | ७ | उरगपाल | उरगमाल |
| ४९ | ६ | इच्छामि नरमांसम् | इच्छामि । नरमांसम् |
| ५० | २३ | सतीश्वर | यतीश्वर |
| ५० | २४ | त्वा | त्वां |